# चिरं जीवन्तु वेदवित्कुलशेखराः सातवळेकराः ।

शतायुषि-वेदवाचस्पति- पं. श्रीपाद दामोदर सातवळेकर महोदयैः सांप्रतिके वसन्ततौ पुण्यपत्तनं स्वीयेन शुभागमनेन पवित्रीक्रियते इति मोददायिनीं वार्तां श्रुत्वा तेषां चरणकमलयोः स्वीयां स्वल्पां सेवां समर्पयितुं सविनयादरं सिद्धं महाराष्ट्रमण्डलम् इति सर्वे जानन्त्येव । संप्रति गुर्जरप्रदेशे स्वाध्यायमण्डलाश्रमे कठोरं तपः तप्त्वा स्वीयं जीवनं वेदपुरुषसेवायां यापयन्तः 'पण्डितजी-' महोदयाः मूलतः महाराष्ट्रप्रदेशस्थाः एव । गान्धी-वधोत्तरं महाराष्ट्रदेशे प्रवर्तिते हत्याकाण्डे अग्निप्रलये च ब्रह्मतेजःसंरक्षणार्थं त्यक्तसर्वस्वैः पं. सातवळेकरैः महाराष्ट्र-मण्डलं परित्यज्य स्वायुषः अशीति (८०) तमे वर्षे शरणीकृतं गुर्जरराज्यम् । तत्र स्थित्वा गतविंशतिवर्षात्मके काले तैः विहिता वेदपुरुषसेवा अतुलनीया खलु । सर्वेषां कृते सुलभाः स्वल्पमूल्याः वेदचतुष्टयग्रन्थाः तैः प्राकाश्यं नीताः । दैवतसंहितादि-विविधाः वेदविमर्शग्रन्थाः अक्षरीकृताः । 'पुरुषार्थ'-प्रकाशनेन भारतवर्षे 'पुरुषार्थः' प्रजाजनेभ्यः परिचायितः । वर्षद्वयात् पूर्वं प्रारब्धा संस्कृतत्रैमासिकीपत्रिका 'अमृतलता' नाम्नी । भारतवर्षेण कथं नाम संपादनीयं तेषाम् आनृण्यं नैव जानीमहे ।



पं. श्री. दा. सातवळेकर

(अवशिष्टं द्वितीये मुखपृष्ठे ..)

चैत्र - वैशाख १८८९

एप्रिल १९६७

शारदा

(...अवशिष्टं प्रथममुखपृष्ठात्)

शारदाकारैः प्रार्थितं महाराष्ट्र-शासनं ३१००० रूप्यकात्मकं द्रव्यं व्ययीकृत्य मुम्बापुर्यां तेषां शासकीयां सत्कृतिं करिष्यति । टिळक-महाराष्ट्र विद्यापीठं '**वेदवित्-कुलशेखर**' इति विशेषोपाधिसमर्पणेन कृतज्ञतां प्रकटीकरिष्यति । पुण्यपुरे पं. सातवळेकर-सत्कृति-मण्डलम् एकोत्तर-लक्षार्धरूप्यकसमर्पणेन महाराष्ट्र-मण्डलस्य महत्तां, राष्ट्रियतां च परिचाययिष्यति । 'शारदा' तत्र सर्वत्र सानन्दं सहभागिनी ।

किं महाराष्ट्रेतर-विभागे भारतवर्षे सर्वे ते ते वेदानुरागिणः हिन्दुत्वनिष्ठाः भारतीयाः महाराष्ट्रजनानाम् अनुकरणं कृत्वा संचरिष्णु-वेदपुरुषस्य शताब्दिमहोत्सवं महतोत्साहेन पारयिष्यन्ति ? दृढं विश्वसिमः वयं यत् सश्रद्धं भारतराष्ट्रं विषयेऽस्मिन् यद् युक्तं तत् समये करिष्यति । यथा 'प्रजा तथा राजा' इति नूतनां सुभाषितोक्तिम् आदृत्य भारत-शासनं 'भारतरत्न'-बहुमानसमर्पणेन शासनस्य बहुमानं संपादयतु इति साग्रहं प्रार्थयामहे ।

**चिरं जीवन्तु वेदवित्कुलशेखराः सातवळेकराः ।**

---

पुणें) महाराष्ट्रराज्यशासन-भारतकेन्द्रशासन-पुरस्कृता विश्वप्रिया (मुम्बई

सौर १ वैशाख १८८९




वर्षम् ८ अङ्कौ ११-१२

वार्षिकमूल्यम् रू. ५ * अस्य अङ्कद्वयस्य रू. ०.५०

## रा म ना म

कल्याणानां निधानं कलिमलमथनं पावनं पावनानाम् ।
पाथेयं यन्मुमुक्षोः सपदि परपदप्राप्तये प्रस्थितस्य ।।
विश्रामस्थानमेकं कविवरवचसां जीवनं सज्जनानाम् ।
बीजं धर्मद्रुमस्य प्रभवतु भवतां भूतये रामनाम ।।

## साहिती-विषयानुपूर्वी



कृपया सत्वरं प्रेष्यतां शारदा-वार्षिक-मूल्यं रू. ५=००

# श्रीप्लवङ्गसंवत्सरस्वागतम्

हास्याऽऽननं मोदमूर्तिं हनुमद्वंशजं नवम् ।
पराभवाऽत्यये प्राप्तं प्लवङ्गमभिवादये ।।१।।

पराभवे पराभूताः कामराजादिदिग्गजाः ।
उत्तुङ्गराष्ट्रनेतारो गते निर्वाचनाऽऽहवे ।।२।।

पराभवस्याऽधिपत्यं विफलत्वस्य कारणम् ।
सर्वंकारस्य यत्नानां लोककल्याणकारिणः ।।३।।

अर्बदसिंहासनाऽऽरूढः स्वयमेव पराभवः ।
विजयाशा कथं तत्र यथा राजा तथा प्रजा ।।४।।

शासनस्य धृतं सूत्रम् अष्टादशसमावधौ ।
नेतृभिर्भारतख्यातैः राष्ट्रसंसद्विचक्षणैः ।।५।।

आक्रोशः साम्यवादस्य तत्कृतः श्रूयते मुहुः ।
अटन्ति पूर्ववत् दीना अन्नवस्त्रगृहं विना ।।६।।

निर्वाचनविनिर्दिष्टं रहस्यं राष्ट्रनेतृभिः ।
निश्चेतव्या ध्रुवं ज्ञात्वा नीतिर्या फलदायिनी ।।७।।

त्यजेद् भोगेषणां मंत्री लोकसेवैकनिश्चयः ।
न ह्यन्नार्थम् अटेदूर्वी स्वीकृत्य स्वाऽवलम्बनम् ।।८।।

उदारा हिन्दभूमाता यत्नशीला च तत्प्रजा ।
दैन्यं तेषामहं मन्ये सर्वंकारस्य संभ्रमात् ।।९।।

खेचरो भूचरं नैव शिक्षादाने लभेद् यशः ।
अधिष्ठानसमानत्वं यशसे भात्यवश्यकम् ।।१०।।

उष्ट्रपृष्ठाऽधिरूढा ये मूढाः सर्वाधिकारिणः ।
आयान्ति ते कदा भूमिं चिन्तयेम् मम शाश्वती ।।११।।

दिशत्येव प्लवङ्गोऽयं हनुमद्वंशजो महान् ।
लोकस्याऽऽराधनातत्त्वं रामेणोपासितं पुरा ।।१२।।

करोम्यभ्यर्थनां तस्मात् प्लवङ्गाय विनम्रधीः ।
रामराज्यस्थापनाय भव त्वं स्फूर्तिदोऽञ्जसा ।।१३।।

अणेवंशसमुत्पन्नेन श्रीहरिसूनुना माधवेन
विरचितमिदम् प्लवङ्गसंवत्सरस्वागतस्तोत्रं संपूर्णम् ।
तेन कालरूपी परमेश्वरः प्रीयताम् ।
तत् सत् ब्रह्मार्पणमस्तु ।

शालिवाहनशके १८८९ — अणे इत्युपाह्वः
अधिकचैत्रशुक्लप्रतिपदि श्रीहरिसूनुर्माधवः

॥ श्रीजगद्गुरुभ्यो नमः ॥

श्रीमत्परमहंसेत्यादिबिरुदोपस्कृतेभ्यः श्री जगद्गुरुशङ्कराचार्य-
द्वारकाशारदापीठाधीश्वरेभ्यः श्री अभिनवसच्चिदानन्द-
तीर्थ-यतीश्वरेभ्यः मद्रपुर-वास्तव्य-भक्तजनतया
सविनयं सादरातियं चेयमुपदीयते

# ॥ स्वागतपत्रिका ॥



श्रीचरणाः श्रीवदनाः । पश्चिमं नैगमं द्वारकीयं शारदाख्यं पीठमधिष्ठाय भुवमभितः नवं नवं सुषमयतां सच्चिदानन्दात्मनां तीर्थोत्तराणां अग्रियेण स्वागतेन नगरमिदं अभितः पवित्रं नवं च भास्वत् ज्योतिष्मत् महस्वत् सञ्जातम् । अद्य परामुखोऽपि भवर्षोऽयं जितकामानां भवतां जैत्रयात्रया जयपूर्वो विभाव्यमानः कामादिरिपुविजयमूलं इतोऽस्माकं भाविनं सम्पदभिवर्षमभिव्यनक्ति । पुरीचैषा मद्रपूर्वाऽपि श्रीकान्तनिलयद्वारकापुरवराधीश्वराणां निवासेन भद्रपूर्णा द्वारकेव प्रशस्यते । वयं चाद्य श्रीणामुदारं द्वाराभिधेयमुपायम् उत्पत्तिस्थलं चोपगताः स्मः । तथा सर्वसंपदां द्वारभूतानां श्रीपादानां विजययात्रा यत्र यत्र प्रवर्तते तत्र सर्वत्र भवितव्यानां सम्पत्तीनां द्वाराणि अद्धा भवन्तीत्यच्छा वदामः ॥

अमृतश्रीविलसिताः ! वस्तुना सत्तां भासा चिद्रूपताम् आत्मना पूर्णानन्दमयतां चोपजुष्य तीर्थोत्तरत्वं ब्रह्मात्मैकभावं च भजतां तत्रभवतां नामानुगुणं स्वरूपोत्पत्तिः, उत स्वरूपानुगुणं नामक्लृप्तिः, उताहो ब्रह्मभावनानुगुणं उभयसंपत्तिः, किमु उभयसिद्धया ब्रह्मभावः, इति बहुधा विचिकित्समाना वयं लोकस्य योगक्षेमकलनाय नामधेयरूपधेयोभयपरिग्रहम् अध्यात्मतत्त्वबोधनाय सच्चिदानन्दात्मताभागधेयं च भजन्त इति सविशेषं विभावयामहे ॥

अमोघदर्शनाः दीर्घदर्शिनः ! यद्भगवद्भजनमेव भद्राणां द्वारं अभ्युपायो भवतियो हि श्रीपतिः श्रीणां प्रभवश्च, यश्च सम्पद्भ्यः देवः नरान् सम्पत्तिभिर्द्वारयति, येन द्वार्यते सम्पदादि स हि भगवान् सर्वस्यापि द्वारमेव सत् द्वारकः प्रतीयते । तदावासात् पुरी च सा द्वारका समुदी-

र्यते । तस्यां च स्वपुर्याम् आसमन्तात् नितरां लयो यस्य स स्वभूत: श्रीकृष्णपरमात्मा द्वारकानिलय: । यद्वा विश्वं तत् पुरमेव गोपगोपीपरिवृढं नितान्तं लीयते यत्र श्रीकृष्णे स द्वारकानिलय: । भवन्तोऽपि तत्पुरवराधीश्वरा: भवतां नारायण इव तत्स्मरणपूर्वं तत्तादात्म्येन योगक्षेमं समाकलयन्तीति भवद्रूपेणोपस्थितं तमेव सन्ध्यासुशरण्यं भगवन्तं साक्षात्कृतवन्त: स्म: ।।

तत्त्वमसीति महावाक्यार्थगम्यं यत्तत्त्वं त्वन्तदर्थयोरभेदात्मकं तेन तत्त्वेन भासमाना भवन्त: असमाना महीयन्त इति तच्छन्द एव स्वच्छन्दतया भवतस्समधिष्ठाप्य नैजं पश्चिमाम्नायपीठं सुषमयति स्मेति प्राध्वं साश्चर्यमुत्पश्याम: । यतश्च सर्वतन्त्रेषु स्वातन्त्र्येण भवतां सर्वत: पुरस्सरत्वेनापश्चिमत्वेऽपि, विश्वेषामपि तथात्वाय आम्नायपीठगौरवाय च तदाधिपत्यं समादृत्य भवन्त: धर्मेषु विद्यासु प्रज्ञासु नीतिषु कीर्तिषु सम्पत्तिषु वा पश्चिमानपि पौरस्तान् पामरानपि विपश्चिदपश्चिमान् वितन्वन्ति । वैश्वहैन्दव्या महत्या समज्यया सर्वाह्लादनं बिम्बमैन्दवमिव हैन्दवं मतं जगत: स्थेम्ने परित: प्रसार्य विश्वानि विमतानि विपदश्च विदूरं पश्चादपनोदयन्ति । पुरापि नवमिव तत्त्वं हितं प्रबोध्य सम्पदस्सकला: पुरो भावयन्ति । 'न विना विदुषां वाक्यैर्नश्यत्याभ्यन्तरं तम: ।' इति दीक्षितेन्द्रोक्तरीत्या अखिलभारतीयं सुधी कुलं च मेळयित्वा जनताया आभ्यन्तरतमोनिवारणेन सामरस्यं सौमनस्यं च विस्तारयन्ति । विश्वहिन्दुपरिषदा अखिलभारतीयविद्वत्समितियोजनादिना धर्मव्यवस्थापकं श्रुतिसंमतं मतं सदातनयन्ति । लोकाभ्युदयायैव पुण्यजन्मभाजां भवतामाध्यक्ष्येण महितम् उभयपरिषन्मेळनमपि संमेळनं सन्मेळनं इत्युभयथापि व्यपदेशमर्हति ।।

भारतदेशशिरस्थानीये केदारक्षेत्रे काश्मीरश्रीनगरे च श्रीभगवत्पादशङ्कराणां श्रुतिशिरस्तत्त्वप्रकाशकानां मूर्ते: प्रतिष्ठा श्रीद्वारकाधीशानां जगद्गुरूणां भवतां द्वारा निर्वर्तिता सती लोकस्य प्रतिष्ठितिं श्रुतिमते संमतिं स्वधर्मे निरतिं च समातनोति ।

तदेवमुदग्रतरप्रभावाणां भवतां पूर्णानुग्रहेण श्रीशारदाद्वारकाधीशचन्द्रमौलीश्वरप्रसादेन च सर्वदैवास्माकं धर्मसमुन्नतिं सम्पदुपचितिं च संप्रार्थयामहे ।

पराभव फाल्गुनशुक्ल त्रयोदशी, "शुभम्" इत्थं **भक्तमहाजना:**,
२४।३।६७ राजा अण्णामलैपुरम्,
मद्रपुरी ।

## स्त्रीणां पतिनामग्रहणप्रसंगे संस्कृतसूक्तयः

(विद्यमानमहाराष्ट्रसूक्तिषु यथेष्टं परिवर्तनं कृत्वा)

मात्रा शिक्षितं विनयनं पित्रा कृतं शिक्षणम् ।
...रायस्य नामग्रहणं मेऽधुना भूषणम् ।।१।।

काव्ये श्रेष्ठः अलंकारः उपमा वा उत्प्रेक्षा ।
...रायस्य सहवासे सदैव मे सुखापेक्षा ।।२।।

स्त्रीणां पवित्रं कर्तव्यं पतिसेवा मन्यते ।
...रायसदृशः पतिः मया जन्मान्तरेऽपि इष्यते ।।३।।

दरिद्रीभूतः देशः नावशिष्टं धनम् ।
...रायस्य नामैव मे जीवनसर्वस्वं जातम् ।। ।

सुवर्णं नैव सुलभं रत्नानां का वार्ता ।
...रायेण सह संसारे न काऽपि मे चिन्ता ।।५।।

शंकर दामोदर पेशवे
डॉक्टर गोगटेचाळ
मुरारजी पेठ, सोलापूर.

## चन्द्राह्वानम्

पश्य पश्य गगनयान बालचन्द्र भो
मा पिधेहि शीतकिरणनीरदान्तरे

मञ्जुवक्त्रस्यन्दमानफेनपुञ्जशोभिनम्
खेलनेन निर्जितं राजनीति-राजकम्
लोकनेन सर्वहृदय-भावहरण-पाटवम्
पश्य पश्य चन्द्रमो बालभाव-चञ्चलम् ... पश्य पश्य

आनने नितान्तचलनकाकपक्षकम्
पौरुषे धिक्कृतं सकलभुवनराजवर्गकम्
मन्दहास-शोभमान-भारतीय-गौरवम्
बालभाव-निर्जितं बालचन्द्र-कीर्तनम् ... पश्य पश्य

डोलिकामृदुलपवनसौख्यशायिनम्
स्तन्यपानसक्तचित्त-मधुरक्रन्दनम्
मातृहृदय-भावशान्तिमलयचन्दनम्
गानमधुर-प्राभवेण सुप्तनन्दनम् ... पश्य पश्य

भूति-भस्म-लसित-देह-बालशङ्करम्
हसित-पुष्पराग-लिप्त-मृदुल-रम्यदेहिनम्
मातृगहन-मानसोर्मि-राजहंसकम्
नयनकुमुद-प्राणदान-शीतकिरण-भासुरम् ... पश्य पश्य

आन्ध्र एज्यु. सो. हायस्कूल,
शीव, मुम्बापुरी २२

**ओगेट्टी परीक्षित्**

---

कविश्रेष्ठ केशवसुतानां 'सतारीचे बोल' इति काव्यस्य

संस्कृतः अनुवादः

# वीणा - स्वराः

आसीद् रजनी तमोमयी सा, ममापि हृदयं दुःखपूरितम् ।
तमसि निगूढं चित्तं गगने, नापश्यत् किल तारकवृन्दम् ।
विमनस्कतया कथं कथमपि प्रचलन्नासं रथ्यासु तदा
कुतोऽपि वातायनादागता, ध्वनयो दिडदा, दिडदा, दिडदा ॥१॥

जडहृदये मे जगद् जडमिदम्, एतत्तत्वं प्रत्ययान्वितम्
किन्तु जडं तत्कथं न सत्यम्, नो जाने, मम मुग्धं चित्तम्
किं कुर्यां वा क्व च गच्छेयम्, जाने नो किं विषं पिबेयम्
एवं सति मे कथं नु सुखदा ध्वनयो दिडदा दिडदा, दिडदा ॥ २ ॥

प्रभञ्जनःस्यात् यदि सम्प्राप्तः, रुचिरः खलु मे तदा म नतः
किंवा स्याद् यदि पिशाचनृत्यम्, सुखदं मे तद् तदा नि चतम्,
यतो हृद्गता विषण्णवृत्तिर् बाह्यभीषणे सा संतुष्यति,
तस्यै वृत्त्यै कथं तुष्टिदा, ध्वनयो दिड दा, दिड दा, दिड दा ॥ ३ ॥

नादं श्रुत्वा क्रोधयुतोऽहम्, तद् वातायनबध्दलोचनो
मुष्टिर्बध्द्वा मया दर्शिता, अपशब्दा अपि तदा प्रयुक्ता ।
उक्तं विरम त्वं मूर्खोऽसि, वीणाभङ्गं किं न करोषि
किमिदं रटनं त्वया कर्कशम्, क्रियते दिड दा, दिड दा, दिड दा, ॥ ४ ॥

अग्रे किंचिन्मया प्रचलितम्, तदा न जाने किं संवृत्तम्
यद्यपि वीणावादनरुष्टः, पुरोऽगतोपि प्रतिनिवृत्तः
तस्मिन् बद्धो ध्वनिजालेऽहम्, न चात्मनः खलु तदा प्राभवम्
अलिंदासनीमध्यासि तदा, शृण्वन् दिड दा, दिड दा, दिड दा ॥ ५ ॥

तत्र कूर्परं स्वाङ्के धृत्वा, करसंपुटगतशीर्षं कृत्वा
उपाविशमहं तदैव करुणारसपूर्णागतिराकृष्टवती
श्रोत्रयुगं मे हृदयं शान्तम्, गीतनिमग्नं, द्रवितं, मुक्तम्
तोयमविरतं नयनतस्तदा शृण्वन् दिड दा, दिड दा, दिड दा ॥ ६ ॥

तदा स्कन्धयोर्निधाय पाणी, आश्वासितवान् कश्चिन्मन्ये
उवाच खेदं कुरुषे किं त्वम्, किमिति जीविते प्रेम विसृष्टम
भज रे धैर्यं, धैर्यशाखिनः फलं शोभनं तथा विशालम्
शृणु हृदयस्था नश्यन्ति गदा ध्वनिभि दिड दा, दिड दा, दिड दा ।। ७।।

आशायुक्ताः स्वरा निर्गता, मृष्टे नयने मया मे तदा
ऊर्ध्वं दृष्टि यदा प्राक्षिपम् नक्षत्राणामयुतमपश्यम्
येषामस्तित्वं खलु विदितम्, मया च नैतत्क्षणपर्यन्तम्
तम अल्पीयो द्युतिर्बहुविधा, प्राहुर्ध्वनयो दिड दा, दिड दा ।। ८ ।।

तस्माद् वाद्यात् तदा निःसृता, उदात्तताप्रेरकाः सुस्वराः
मया कल्पितं मम चिद्रूपम्, स्फुरद् व्याप्तवत् निखिलं विश्वम्
दिक्कालानां परतो भूत्वा, प्रभवे विलयेऽप्यनन्त आसम्
मया विस्मृताः सर्वे भेदा, आकर्णयता दिड दा, दिड दा ।। ९ ।।

प्रेमरसमया मधुराः शब्दाः, वीणावाद्यात् यदा निर्गता ।
मुग्धो दृष्ट्वा निखिलचारुताम्, भुवं चाप्सरानर्तनसहिताम्
स्वर्गो वसुधाचुम्बनसक्तो, भुवमवतीर्णो मया धारितो
व्यतरन्नेवं मुदं ते तदा, ध्वनयो दिड दा, दिड दा, दिड दा ।। १० ।।

अन्ते शान्ता गतिरुद्गीता, शान्ता वसुधा निशा च शान्ता
शान्ताः पवनाः शान्ततारकम् गगनं हृदयं सर्वं शान्तम्
ससुखं सदनं चैवं प्राप्तः शान्तिसमन्वितमनसा सुप्तः
शब्दा उक्ताः किन्त्वनेकदा स्वप्ने दिड दा दिड दा दिड दा ।। ११ ।।

— गो. श्री. जोगळेकर,
बी. एस्सी., बी. टी., जे. पी.
४/५ गोरेगांवकर गल्ली, गिरगांव, मुंबई ४.
ध. श्री. हायस्कूल, शीव, मुंबई २२.
दूरध्वनि- ४७२३३०.



## सुरभारती - भोपाळ

### प्रथमवार्षिकोत्सवे

( तारीख ३१ मार्च १९६७ )

म. म. डॉ. दत्तो वामन पोतदार

( पद्मभूषण ) इत्येतैः प्रदत्तम्

## अध्यक्षीयं भाषणम्

## संस्कृतसंजीवनी

अहो मध्यप्रदेशराज्यपालाः रेड्डीमहोदयाः तथा च सुरभारतीसंस्थायाः अध्यक्षाः वेलणकरपण्डिताः तथा च संस्कृताभिमानिनः रसिकाः सज्जनाश्च–

भोपालनगरम् मध्यप्रदेशस्थम् "ताल" विख्यातम् बिडलामंदिरालङ्कृतम् पर्वतवेष्टितम् विद्युद्दीपप्रकाशितम् नित्यवर्धमानम् निखिलभारतवासिनाम् प्रमोदाभिमानस्थानम् दृष्ट्वा नितरां प्रमोदते नश्चेतः । अस्मिन्महानगरे सुरभारतीसंस्था नूतना स्थापिता । तस्याः संस्थायाश्च अद्य प्रथमवार्षिकोत्सवः सदस्यैः सानन्दं संपाद्यते । तस्मिन्प्रसङ्गे प्रमुखातिथिपदे मदीया योजना सुरभारतीचालकैः कृता, हृदि विकसितं प्रेम च प्रकटितम् । एतदर्थम् भूरिभूरि वन्दनानि क्रियन्ते मया सर्वेषाम् । नास्मात्स्थलात् सुदूरा उदयगिरिनीचैर्गिरिनाम्ना महाकविना कालिदासेन वर्णिता विख्याता विदिशा भूमिः । तस्मात् सुरभारती-स्वर्गभूमिरियम् । नाहम् पण्डितः न चापि कविः । नास्ति कोऽपि अधिकारः सम्पादितः मया पण्डितसमाजे भाषणप्रवचनकर्मार्थम् । श्रेष्ठैः आहूतः सुरभारतीसेवार्थम् । तत्र आज्ञाभङ्गः न कर्तव्यः इति मनसि विचार्य उपस्थितोऽस्मि । अद्य भाषणम् दातव्यम् भवति । किन्तु न विस्मृतम् मया सुभाषितवचनम् 'विशेषतः सर्वविदां समाजे विभूषणम् मौनम् अपण्डितानाम्' । जाने यत् मदीयः अयं प्रयत्नः 'प्रांशुलभ्ये फले लोभात् उद्बाहुरिव वामनः' एतत्सदृशो भवेत् । तर्हि क्षन्तव्योऽयं जनः ।

अयि सुरभारतीप्रणयिनः

देववाणीवर्णने सहस्रजिह्वः शेषः अपि कुण्ठितो भवेत् । किं पुनः मादृशो माणवकः ? जागर्ति महीतले देववाण्याः कीर्तिडिण्डिमः । आवेदात् स्मृतिपुराण काव्यशास्त्रप्रबन्धादिग्रन्थराशिं चारभ्य राजवाडेकरप्रभृत्याधुनिकनिबंधकाव्य नाटककारपर्यन्तं वहति अखण्डितः संस्कृतस्य दिव्यस्रोतः समस्तभूतलम् आनन्दयन्

बोधयन् च । येन सर्वे सन्तुष्टा नतमस्तका भवन्ति । अवदन् पुनरपि केचन संस्कृत-भाषा मृता इति । समीचीनतया तात्पर्यग्रहणे मृतशब्देन केवलं इदमेव बोद्धव्यं यत् एषा संस्कृतभाषा सांप्रतिके युगे जनानां व्यवहारभाषारूपेण न जीवति । किन्तु एषा देववाणी सत्यं त्रिकालममृता वर्तते । नास्ति कुत्रापि केषामपि कुत्रचिदपि सामर्थ्यं येन संस्कृतं मृतं भवेत् । अस्तु नाम एषा मृतमारणकथा । आब्राह्मणचाण्डालादिपर्यन्तं सर्वेऽपि स्त्रीपुरुषबालकादयः संस्कृतभाषया एव आबाल्यात्मरणपर्यन्तं व्यवहरन्ति स्म इति एकः पक्षो वर्तते । अन्यपक्षे प्राकृत-नाम्ना परिगणिताः भाषाः यथा तमिळादयः संस्कृतपूर्ववर्तिन्यः आसन् । अग्रे यदा सस्कृतं सुप्रतिष्ठितं जातं तदा तेन संस्कृतेन अपसारिताः प्राकृताः अपभ्रष्टा संजाताः । तासां मूलस्वरूपाणि संस्कृतमिश्रणेन नूतनानि स्वरूपाणि गृहीत्वा जन-व्यवहारे सुप्रतिष्ठितानि अभवन् । प्राकृतसंस्कृतशब्दयोः अर्थान्तरप्रवेशेनापि इदं मतम् परिपुष्टं भवत् । प्राकृतशब्देन मूलप्रकृतिदर्शनम् । संस्कृतशब्देन प्रकृतेः उपरि कृतसंकारात् सिद्धं संस्कृतरूपम् । अतिगहनोऽयं विषयः । नैश्चित्येन किमपि वक्त न समर्थोऽस्मि । अप्रासङ्गिकमपि तत् स्यात् । सा ऐतिहासिकी कथा अतिप्राचीना । तस्याः स्वरूपदर्शनं दुष्करम् । तथापि गतसहस्रवर्षात्मके काले विविधानां प्राकृत-भाषाणाम् अस्मिन् भारतवर्षे उदयः शनैः शनैः प्रसारश्च स्पष्टतया दृश्यते । सार्व-जनीनः सर्वोऽपि व्यवहारः तेषु तेषु प्रदेशेषु तासां तासां प्राकृतभाषाणाम् आश्रये-णैव भवति इति निश्चप्रचम् वक्तुं शक्यते ।

एषा प्रत्यक्षा स्थितिर्वर्तते । तत्र संस्कृतभाषायाः अध्ययनाध्यापनं कथ वृद्धिं गच्छेत् तथैव च अध्ययनाध्यापनतत्पराणां पण्डितानां विषये अपि शासकानां तथैव च प्रजानां किं कर्तव्यम् उचितं भवेत् अस्य सर्वस्य विषयस्य प्रपञ्चः अद्य कर्तव्यो भवति । भारतीया संस्कृतिः संस्कृताश्रिता । संस्कृतं विना कथं संस्कृतिः रक्षिता वर्धिता च भवेत् इत्याशङ्कया प्रायः सर्वेषां विदुषाम् इत्थं मतम् प्रकटीभूतं दृश्यते यत् संस्कृतभाषायाः अध्ययनं सांप्रतम् ऐच्छिकं कृतं विद्यालयेषु तत् संस्कृतिरक्षण-दृष्ट्या अतीव हानिकरम् । तस्मात् संस्कृतशिक्षा प्रशालासु अनिवार्या कर्तव्या छात्राणाम् इति साग्रहं प्रतिपाद्यते । तत्र इदं विचारणीयं भवति । अस्मिन्देशे सहस्रवर्षपर्यन्तं विकसिताः साहित्यादिसंपन्ना याः प्राकृतभाषाः वर्तन्ते तासु भारतीया संस्कृतिः न प्रतिबिम्बिता न वा अग्रे संस्कृतिसाधनार्थं तासां कापि उपयोगिता ?

अयि मान्याः । शान्तमनसा कञ्चित्कालपर्यन्तं विचारयन्तु तत्रभवन्तः । ज्ञानेश्वरविरचिता ज्ञानदेवी अथ च श्रीतुकारामकृताः अभङ्गाः तथैव च श्रीएकनाथ-विरचितम् भागवतं अन्यच्च रामायणम् इत्यादि बहुभिः श्रेष्ठैः साधुभिः सहस्रशः ग्रन्थाः प्राकृते विरचिताः । श्रीरामदासप्रभृतिभिः दासबोधादयो ग्रंथाः रचिताः । शेख-महम्मदमहोदयैः योगसङ्ग्रामः श्रीत्र्यंबकरायैः कृतो बालबोधः इत्यादयः सर्वेऽपि ग्रथाः

संस्कृतिशून्याः वा ? भारतीया संस्कृतिः एतैर्विरचितग्रंथेषु न समीचीनतया प्रति-बिम्बिता? कोटिशः जनैः साम्प्रतिके युगे एते सर्वेऽपि महापुरुषाः शरणीकृताः। जीवन-साफल्यं तु अस्माभिः अत्रैव लब्धम् इति तेषां उद्घोषः प्रतिक्षणं श्रूयते। एतत्सर्व कार्यं प्राकृतभाषाभिः साधितम्। मन्ये तावत् संस्कृतिरक्षणार्थं विपुलं साहित्यं प्राकृत-भाषासु उपलब्धम्। प्रतिदिनम् नैके ग्रन्थाः प्राकृतभाषाद्वारा विरचिताः दृश्यन्ते। तस्मात् संस्कृतिरक्षणार्थं संस्कृतमेव अध्येतव्यम् नो चेत् संस्कृतिः विनाशं गच्छेत् इति तर्कः उपपन्नो दृश्यते वा ? यद्यत् संस्कृतिविषये आवश्यकं वर्तते तत् तत् यदि अद्यावधि प्राकृते नोपलब्धं स्यात् तर्हि झटित्येव तेषां सर्वेषां उपयुक्तांशान संग्रहं प्राकृतद्वारा सुलभतया कृत्वा सर्वेषां जनानां सन्तोषं साधयितुं सुशकम इत्यत्र नास्ति कोऽपि सन्देहलेशः। अतोऽहं ब्रवीमि यत्, यावत् संस्कृतं प्रशालासु अनिवार्यं न क्रियते तावत् संस्कृतिरक्षणं कदापि न भवेत् इत्याशयः भ्रममूलकः एव। अत्र तावत् मया संक्षेपेण केवलं दिक्प्रदर्शनं कृतम्। तस्मात् अलं विस्तरेण।

तर्हि किम् संस्कृतस्य कृते किमपि न कार्यम् इति प्रतिपाद्यते भवद्भिः ? इति पृच्छा कृता चेत् कदापि न तथा इत्युच्यते अस्माभिः। **संस्कृतपाण्डित्यस्य संरक्षणं संवर्धनं सर्वात्मना अस्माभिः अवश्यं कर्तव्यम्** इति अस्माकं मतिः। या प्राचीना महती पण्डितपरम्परा अस्मिन्देशे अद्यावधि जीविता दृश्यते तस्याः संरक्षणसंवर्धनार्थं प्रशालासु संस्कृतशिक्षायाः अनिवार्यत्वरूपः उपायः नोपकारकः। प्रशालासु किंचित् संस्कृतं ज्ञातं भवेत् तेन न सिध्येत् संस्कृतिरक्षणम्, नापि पाण्डित्यरक्षणम्। पाण्डित्यरक्षणार्थं अन्ये उपायाः शोधनीयाः। सांप्रतं नूतनाः छात्राः संस्कृतशास्त्राध्ययनार्थं नोपलभ्यन्ते। एषः सार्वत्रिकः अनुभवः। अत्रैदं भयं तिष्ठति। यत् एषा पण्डितपरम्परा खण्डिता भवेत् छात्राभावात्। ये पण्डिताः अधुना विद्यन्ते तैः यत् अध्ययनं कृतम् तत् प्रायः श्रद्धाबलात्। एषां पण्डितानां आजीविका अतिदुष्करा सञ्जाता। न्यायसांख्यमीमांसाध्ययनेन कथम् आजीविका सिध्येत्। अस्मिन् युगे एतेषाम् जीर्णानाम् शास्त्राणाम् अध्ययनेन कथं आजीविका साधनीया इति महती शङ्का छात्राणां पुरस्तात् वर्तते। आजीविका कथं तर्हि साधनीया। ये वेदपाठकाः वर्तन्ते तेषु अपि ये घनपाठिनः तेषाम् घनान्ताध्ययनेन अपि न सिध्यति आजीविका। ये तु दैनंदिनधर्मकर्मप्रवीणाः वर्तन्ते ते विना घनान्ता-ध्ययनं जीविकाम् साधयन्ति। विकृतिपठनपरपरा अपि विनाशं गच्छेत् अथवा गतप्राया इति दृश्यते। तस्मात् आजीविकाविषयः एव प्रधानः। तदर्थं अस्मदीया योजना अग्रे स्पष्टीक्रियते।

विद्यमानप्रशालाक्रमे या शालान्तपरीक्षा विद्यते तत्र केचन विषयाः अनिवार्याः अन्ये ऐच्छिकाः। ये केचन विद्यापीठप्रदत्तोपाधिग्रहणार्थम् महाविद्यालयेषु अध्यय-नार्थं गच्छन्ति तेषां कृते अनिवार्यविषयाणां सूचिः निश्चिता भवति। तत्र संस्कृतभाषायाः अनिवार्यत्वेन नास्ति प्रवेशः साधारणतया। किन्तु तत्रापि

ये केचन वाणिज्यविषये कृषिविषये वा शालान्तपरीक्षाप्रमाणपत्रं ग्रहीतुम् इच्छन्ति तेषां कृते साधारणतया स्वभाषा, आङ्गलभाषा, आधुनिकशास्त्रपरिचयः इत्यादयः त्रयः चत्वारो वा विषयाः अनिवार्याः। अन्ये च विषयाः कृषिवाणिज्यशाखान्तर्गताः वर्तन्ते। तत्रेदं नूतम् संसूचनम् क्रियते अस्माभिः यत् अनिवार्यत्वेन ये विषयाः महाविद्यालयप्रविविक्षूणां कृते निर्धारिता वर्तन्ते ते तथैव तिष्ठन्तु। ऐच्छिकविभागे निर्धारितानाम् प्रश्नपत्राणां कृते केवलं एकं संस्कृतं तिष्ठतु। अनेन प्रकारेण शालान्तपरीक्षायां एकः नूतनः शाखापर्यायः स्वीकर्तव्यः स्यात्। तत्र उत्तीर्णाः विद्यार्थिनः संस्कृताध्ययनं साधारणतः अष्टमकक्षातः एकादशकक्षान्तं यावत् वर्षचतुष्टयं कृत्वा शालान्तपरीक्षायाम् उत्तीर्णाः भविष्यन्ति। महाविद्यालयेषु सामान्यतः शाखाविभाजनमेव क्रियते। यथा-साहित्यशाखा वाणिज्यशाखा भौतिकशास्त्रशाखा इति। तत्र केचन विषयाः अनिवार्याः। ऐच्छिकविषयाः यथाशाखमपि भिन्नाः वर्तन्ते। अत्र संसूच्यते यत् साहित्यविभागे एका नूतना संस्कृतशाखा स्थापनीया। तत्र आंग्लभाषा स्वभाषा अन्ये च ये अनिवार्याः सर्वेषां कृते च संमता विषयाः ते संस्कृतशाखाछात्राणां कृते अपितथैव रक्षणीयाः। ऐच्छिकविभागे केवलं संस्कृतं रक्षणीयम्। प्रश्नपत्रिकासंख्या समाना करणीया। अनेन क्रमेण पदवीग्रहणार्थं अनिवार्यपक्षे समानत्वं, ऐच्छिकपक्षे संस्कृतम् इत्याकारकः नूतनः अभ्यासक्रमः स्थापनीयः। तेन आंग्लस्वभाषादि-अनिवार्यविषयपक्षे यथा इतरेषां तथैव अतेषां संस्कृतछात्राणाम् एकः एव स्तरः साधनीयः। किमपि न्यूनत्वं न रक्षणीयम्। इत्थं कृतं चेत् एते संस्कृताध्ययनतत्पराः छात्राः संस्कृताध्ययनं पदवीपरीक्षापर्यन्तं कर्तुं प्रभवन्ति। संस्कृतस्य विशेषाध्ययनं तेषां भवेत्। तत्र तैः साहित्य-न्याय-मीमांसादि-शास्त्रसंभारात् किमपि एकम् शास्त्रम् स्वीकरणीयम्। तस्मिन्नेव प्रावीण्यम् संपादनीयं पदवीग्रहणं च संस्कृतनाम्ना कर्तव्यम्। अग्रे या एम्. ए. नाम्नी परीक्षा वर्तते तत्र सर्वाण्यपि प्रश्नपत्राणि पूर्वगृहीतशास्त्रविषयकाण्येव भवन्तु। तदग्रे एका वाचस्पतिपरीक्षा तस्मिन्नेव शास्त्रे दातव्या भवेत्। अनेन प्रशालासु वर्षचतुष्टयपर्यन्तं अग्रे महाविद्यालयेषु शास्त्रे पुनश्च वर्षचतुष्टयपर्यन्त तदग्रे वर्षद्वयपर्यन्तं इत्थं एम्. ए. परीक्षार्थं दशवर्षपर्यन्तं छात्रस्य संस्कृताध्ययनं भवेत। गृहीतशास्त्रे तस्य अध्ययनं अनेन प्रकारेण समीचीनं भवेत्। तेन एकस्मिन् शास्त्रे पाण्डित्यं अपि साधितं भवेत्। अग्रे यावत् शास्त्राध्ययनं उर्वरितं वर्तते तावत् पारयित्वा अन्ततो गत्वा तेन छात्रेण वाचस्पतिपरीक्षाग्रहणे प्रयतितव्यम्। यथा व्याकरणे शेखरान्तम्। अन्यच्च अयं छात्रः बी. ए., एम्. ए. इति पदवीग्रहणार्थम् विद्यापीठपरिपाटीमनुसृत्य तासु तासु परीक्षासु उत्तीर्णानाम् अन्येषां छात्राणाम् समानो भवेत्। अग्रे यत्र यत्र बी. ए., एम् ए. इत्यादीनां प्रवेशः, यथा बी. टी., बी कॉम, एल्एल्. बी. एतत्सर्वम् साधयितुम् स पात्रं भवेत्। यत्र बी. ए. गृहीतानां प्रवेशः शासनसेवार्थं तत्र अस्यापि प्रवेशसौकर्यम्। इत्थम् आजीविकार्थम् अन्येषां संपादितविद्यापीठपदवी-

कानां समानत्वम् अनेन संप्राप्तं भवेत् । ये ये आजीविकोपाया : इतरेषाम् सर्वेषाम् उपाधिधारकाणां कृते वर्तन्ते ते एतेषां छात्राणां कृतेऽपि तथैव । अत्रापि स्थूलदिग्दर्शनमेव कृतं वर्तते । संस्कृतपाण्डित्यदृष्ट्या अयम् आप्तपदवीकः छात्रः पाण्डित्येऽपि शास्त्री-पण्डित-इत्यादि-पूर्वपदवीपरम्परासिद्धछात्राणाम् समानो भवेत् । अस्मिन् युगे मुद्रितानां सटीकानाम् ससूचिकानां मुद्रितग्रंथानां वैपुल्यं वर्तते । तर्हि नास्ति यथापूर्वं ग्रन्थकण्ठस्थीकरणम् आवश्यकम् । कदाचित् स्वीकृतस्य शास्त्रस्य एकस्य आकरग्रन्थस्य कण्ठस्थीकरणम् अलं भवेत् । प्रशालाकाले अमरकोशः कण्ठस्थीकर्तव्यः । तथैव समासचक्रम–रूपावलिः इत्यादयः सुलभाः ग्रन्थाः कण्ठस्थीकर्तव्याः । व्याकरणार्थं कश्चन सुलभः ग्रन्थः अपि कण्ठस्थीकर्तव्यः । शक्यं चेत् पाणिनिकृता अष्टाध्यायी अपि कण्ठस्थीकर्तव्या । मया समग्रस्य अभ्यासक्रमस्य योजना नात्र प्रकटीक्रियते । केवलं दिक् प्रदर्शिता । मत्स्वीकृतेन उपायेन यथा संस्कृतपाण्डित्यस्य संरक्षणं भवेत् तथा आजीविकासमस्या अपि निवारिता स्यात् ।

प्राचीनकाले भारतवर्षे अनेकासां विद्यानां कलानां च प्रसरः आसीत् । तत्तत्-च्छास्त्रकलाप्रवर्तकाःनैकशो ग्रन्थाः अपि विरचिता उपलभ्यन्ते । विद्यापरिगणना चतुर्दशसंख्याका अष्टादशसंख्याका वा कृता दृश्यते । यथा विष्णुपुराणे —

अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः ।
धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ।।
आयुर्वेदो धनुर्वेदो गांधर्वश्चेति ते त्रयः ।
अर्थशास्त्रं चतुर्थं च विद्या ह्यष्टादशैव ताः ।।

अङ्गानि – शिक्षा कल्पो व्याकरणं ज्योतिषं निरुक्तं छंदांसि । तथैव च चतुःषष्टिकलानां प्रख्यापनं शैवतंत्रे कृतम् । तन्मध्ये गीतं वाद्यं नृत्यं नाट्यम् आलेख्यं पुस्तकवाचनम् तक्षणम् वास्तुविद्या धातुवादः वृक्षायुर्वेदयोगाः देशभाषाज्ञानम् यन्त्रमातृका इत्यादीनां समावेशः कृतो दृश्यते । गुप्तराज्यकाले एतासां सर्वासां कलानां प्रकर्षः आसीत् इति चतुर्भाणीसदृशेषु ग्रन्थेषु सविस्तरम् उपलभ्यते । अत्र विचार्यमाणे एतासाम् अष्टादशविद्यानां तथैव च एतासां चतुःषष्टिकलानां संवर्धनं संप्रति जनेषु कियत्परिमितं दृश्यते इति विवेचनीयं भवेत् । चर्मकाराः कुम्भकाराः तक्षकाः इत्यादयः जातयः तत्तत्कर्मणि अद्यापि कुशलाः जीवनोपायं च साधयन्ति । तेषामेव आश्रयेण नागरिकाणां, शिक्षितानां पण्डितानां च नैकविधव्यवहाराः प्रापंचिकाः सिध्यंति । तैः विना भारते जीवनमपि अशक्यं भवेत् । किन्तु कलामूलकविद्यायाः सर्वथा लोपः सञ्जातः इति सत्यम् । नागार्जुनाद्याः रससिद्धाः रसविद्याकोविदाः अधुना लुप्तप्रायाः । सा परम्परा ये केचन कर्मकराः विद्यन्ते तेषां हस्ते यावत् पितृपरम्परया आगता तावदेव तिष्ठति । कोऽपि पण्डितः न दृश्यते, कापि प्राचीना पाठशाला न श्रुता यत्र एतासां कलानाम् एतासाम् युउपक्तविद्यानां सर्वासाम् अध्ययनम् अध्यापनं च प्रचलति । संस्कृतपाण्डित्यं तावत्

वेदस्मृतिन्यायव्याकरणमीमांसादीनाम् अध्ययनाध्यापने समाप्तं संदृश्यते । तदर्थमेव घटपटप्रपञ्चः पाठशालासु श्रूयते । न कुत्रापि वात्स्यायन–महर्षिकृतकामसूत्रस्य न वा समराङ्गणसूत्रधारसदृशग्रन्थानाम् अध्ययनं प्रवर्तते पारम्परिकपाठशालासु । तदर्थं सूक्ष्माः पण्डिताः न दृश्यन्ते इति उक्तं चेत् तत् न मिथ्या भवेत् । आलोचनीयं तर्हि एतत्सर्वं तत्रभवद्भिः सुरभारतीप्रणयिभिः सर्वैः विद्वद्वरैः इति हस्ताञ्जलिपुटं प्रसार्य प्रार्थयेऽहं सविनयम् । विचार्यतां तर्हि केन प्रकारेण अस्माभिः सर्वासां प्राचीनविद्यानां संरक्षणं संवर्धनं च कृतम् ? नैव कृतं इति प्रतिपाद्यते ; मन्ये च अयं महान्दोषः अस्मच्छिरस्यैव निपतेत् । अस्मदीयैः संस्कृतपण्डितैः अत्र यदि अनादरः न कृतः स्यात् तर्हि आजीविकाविषये तैः या चिन्ता अधुना अनुभूयते सा सर्वथा अनुपपन्ना इति स्पष्टं वक्तुं शक्यते । आस्तां तावत् । गतम् न शोच्यम् ।

अस्मिन्युगे पाश्चात्यदेशेषु भौतिकशास्त्राविष्कारः तत्रस्थैः पण्डितैः प्रायोगिकैश्च परां कोटिम् नीतो दृश्यते । तदाश्रयेण विविधाः जीवनोपायाः तैः सुसम्पन्नाः कृताः । किन्तु अस्मत्पण्डितवरैः पाश्चात्यैः साधितस्य अस्य महतः कर्मयोगस्य वार्तापि न श्रुता । नाध्ययनं न देशदनर्शम् । किमपि न कृतम् । ते केवलं परम्पराप्राप्तवेदव्याकरणादिविषयाध्ययने अेव मग्नाः । पाश्चात्यैस्तावत् स्वीयविद्याबलात् आक्रान्ता अस्मदीया प्रिया भारतभूः । वयं च सर्वेऽपि दासतां नीताः जीवनोपायः कथं साधनीयः इति चिन्तायां मग्नाः । न पूर्वजैः साधितानां विद्यानाम् रक्षणम् कृतम् अस्माभिः न च नूतनविद्योदयः दृष्टः । सर्वं पाण्डित्यं पुनः साधनीयम् इति नूतना प्रज्वलिता आकाङ्क्षा यदा समुद्भवेत् तदा अस्माकम् समुद्धारः न दुष्करः । तदर्थमेव संस्कृते नूतनसहितम् परम्पराप्राप्तं पाण्डित्यम् सजीवितम् कर्तव्यम् इत्यर्थम् अयं ममाक्रोशः । एतत्कार्यं पाठशालासु प्रशालासु किञ्चित्संस्कृतशिक्षायाः अनिवार्यकरणेन कदापि न सिद्धं भवेत् । संस्कृतपाठशालानां पाण्डित्यस्य च पुनरुद्धारः अवश्यं साधनीयो भवेत् । शासकानां प्रजानां च तत् अवश्यं कर्तव्यं भवेत् इत्यत्र नास्ति सन्देहावकाशः । संस्कृतस्य पुनरुज्जीवनं कथं कर्तव्यम् संस्कृतं पुनः जीवितं कथम् भवेत् ? सम्मानपदवी संस्कृतेन कथम् संपादनीया ? एतदर्थं ये उपायाः मया चिन्तिताः ते अत्र मया दिक्प्रदर्शनं कृत्वा स्पष्टीकृताः । संस्कृते मदीया प्रीतिः वते आदरश्चापि वर्तते । संस्कृताध्ययनम्, सर्वैरपि साधनीयम् इति महती आकाङ्क्षा मन्मनसि सन्निविष्टा । उद्घोष्यते च यत् एकोऽपि युवा, युवती वा संस्कृताध्ययनार्थं स्वेच्छया आगच्छति तदर्थं शासकैः अवश्यं योजना कर्तव्या । किन्तु बलात् तत्साधनीनम् इति नोपपन्नम् । प्रेम्णा एव सर्वं साधयितुं शक्यते । संस्कृतपण्डितानां परिपालनं शासकैः अवश्य कर्तव्यम् । पाठशालाः पोषणीयाः । पण्डितानां कृते विद्यासाधनाय आवश्यकं द्रव्यसाहाय्यम् औदार्येण देयम् । सुरुचिराः सर्वेऽपि उपायाः उपरिप्रतिपादितेष्टसाधनार्थं योजनीयाः । सर्वे अपि विद्याभिमानिनः शासकाः लोकाश्च तदर्थं प्रचोदयितव्याः प्रतिदिनम् । किन्तु [illegible] कर्तव्यम् । न हठात् सिद्धिर्भवेत् ।

संस्कृतस्य पूर्वाध्ययनं विना प्रदेशभाषाग्रथितसाहित्यस्य तौलनिकमध्ययनम् पारम्परिकविषयेषु न श्लाघ्यम् नानुमोदितव्यं च । संस्कृतप्राकृतयोः घनिष्ठः सबंन्धः वर्तते । तं लक्ष्यीकृत्यं प्राकृतभाषाध्ययनक्रमः कौशलेन विरचयितव्यः येन स सम्बन्धः छात्राणाम् हृदि सुप्रतिष्ठितो भवेत् । तदर्थं व्युत्पत्तिप्रदीपसदृश-ग्रन्थानाम् योजना अध्ययने कर्तव्या । प्रादेशिकभाषाध्यापकानां कृते संस्कृतसाहित्यस्य ज्ञानम् परिचयः न केवलम् उपयुक्तो भवेत् किन्तु आवश्यकः कर्तव्यः । छात्राणाम् कृते प्रादेशिकभाषाद्वारा सकलविद्याग्रहणमार्गः न रोद्धव्यः। साधु उक्तं च शिवधर्मे-संस्कृतैः प्राकृतैः वाक्यैः यः शिष्यमनुरूपतः । देशभाषाद्युपायैश्च बोधयेत्स गुरुः स्मृतः ।

नागपुरे मया प्रदत्ते दीक्षांतभाषणे त्रिभाषासूत्रविवरणम् भाषया कृतम् अवलोकनीयम् । येन विषयः अधिकः स्पष्टो भवेत् । संक्षेपेण मया तस्मिन् भाषणे सिद्धांतितम् यत् भारतीयशिक्षाक्रमे प्रथमे स्थाने स्वकीयप्रौढभाषाध्ययनम् सशास्त्रं सप्रपञ्चं समूलं च । द्वितीयं स्थानम् सार्वत्रिकनिखिलभारतीयव्यवहारे तथैव च अध्यापनादिकार्ये तथैव च सार्वभारतीयसभासंमेलनेषु "भारतीयराष्ट्रभाषा" नाम्ना प्रथित-हिन्दी-हिन्दुस्तानीभाषार्थं निश्चेतव्यम् । तृतीयस्थाने आंग्लभाषा स्थापनीया तस्याः साम्प्रतकालीनं वैशिष्टयं लक्ष्यीकृत्य । भौतिकशास्त्राणाम् अध्ययनार्थम् आंग्लभाषायाः आवश्यकता उपयोगित्वंच न विवादास्पदम् । एका साधारणी शिक्षणप्रणाली प्रादेशिकभाषा तथैव च हिन्दीभाषा इति भाषाद्वया-श्रयेण पारितुम् शक्यते । किन्तु अनेन मार्गेण आप्तविद्यानाम् आंग्लभाषाबलाद्विना तन्न हितकरं स्यात् । आंग्लभाषाध्ययनेऽपि प्रचलितशिक्षापद्धतिपरिवर्तनम् अपेक्ष्यते । आंग्लभाषाध्ययनं तावत् नूतनज्ञानग्रहणार्थमेव कर्तव्यं भवति यत् ज्ञानम् न संस्कृते न च प्राकृते अद्यावधि यथावश्यकम् सन्निविष्टम् । प्रतिदिनम् आंग्ल-भाषाद्वारा ज्ञानसंवर्धनम् भवति पत्रिका-पुस्तिकाद्वारा, ग्रंथद्वारा च । तत्ज्ञान-ग्रहणार्थं आंग्लभाषायाः तत्तच्छास्त्रज्ञानसाधनार्थम् अध्ययनं कर्तव्यम् । न तु गद्यगोष्ठी-कविता-नाटकादिकानाम् अध्ययनार्थम् । समीचीनतया आंग्लभाषा-ग्रथिताभिप्रायस्य प्रमादरहितं ज्ञानम् आवश्यकम् । येन ग्रंथाध्ययनम् सुकरं भवेत् तत्र आवश्यकी शक्तिः, गतिः प्राप्ता भवेत् । आंग्लभाषाद्वारा लेखनभाषणाद्यर्थं शक्तिर्नापेक्ष्यते । नास्माकं तया भाषया भारते व्यवहारस्य प्रयोजनम् । नूतनस्य ज्ञानस्य संग्रह एव आंग्लभाषाध्ययनस्य केवलम् अेकं सुयुक्तम् प्रयोजनम् । तत् लक्ष्यीकृत्य आंग्लभाषाध्ययनाध्यापनपरिपाटी प्रयोक्तव्या । अध्यापने सांप्रतिकप-रिपाटीपरिवर्तनं कर्तव्यम् । अस्मिन् त्रिभाषासूत्रे मया संस्कृतभाषाध्ययनस्य अनिवार्यत्वेन न संग्रहः कृतः । पूर्वोक्तेन मदीयाभिप्रायः स्फुटीभूतः इति मन्ये । अलम् अधिकविस्तरेण ।

भारते संप्रति संस्कृतवृत्तपत्राणि मासिकानि प्रकाश्यन्ते । नूतना ग्रंथरचनापि प्रचलति । सुरभारतीप्रवर्तकैः वेलणकरमहोदयः सौभद्रादि-महाराष्ट्रभाषा-

ग्रथितानाम् नाटकानाम् अत्युत्कृष्टं मधुरं रसिकजनमनोविनोदास्पदम् भाषान्तरं संस्कृते निबद्धम् । राशिवडेकरादि–विद्वद्भिः पूर्वमेव संस्कृतभाषा जीवति इति स्वकीयलेखनकौशलेन प्रतिष्ठापितम् । सा महती परम्परा भारते न केवलं प्रचलति किन्तु वर्धमाना दृश्यते । तथापि यद् इतिहासतत्वज्ञानादिधनम् पाश्चात्यैः नूतननिर्मितम् तस्य संग्रहः अद्यावधि भारते यावत् अपेक्षितो वर्तते तावन्मात्रया न कृतः । मार्क्सदर्शनम्, काण्टदर्शनम् सूत्रभाष्यवार्त्तिकद्वारा रचनार्थं भारतीयसंस्कृतपण्डितानाह्वयति । आस्तिकनास्तिकमतप्रवर्तकानि प्राचीनमुनीनाम् दर्शनानि यथा संस्कृते ग्रथितानि दृश्यन्ते तथा ॲरिस्टॉटल्, प्लेटो, क्रोशे प्रभृति-आधुनिकवैचारिकाणान्दर्शनानाम् उद्घाटनम्, खण्डनम्, मण्डनं वा सप्रमाणं सविस्तरं पूर्वोत्तरपक्षपद्धत्या संस्कृते अद्यापि पण्डितप्रवरैः ग्रथितं न दृश्यते । तदपेक्ष्यते ज्ञानपरिपूरणार्थम् । येन निखिलं जगत् प्रभावितं दृश्यते तस्य नूतनाविष्कारस्य स्पर्शोऽपि संस्कृते नाद्यावधि केनापि कृतः । एतत्कथम् भूषणास्पदम् भवेत् । नूतन-काव्य-नाटक-प्रबन्धादि-ग्रन्थानाम् विरचनम् कथम् अलं भवेत् । संस्कृतसाहित्यम् सर्वाङ्गपरिपूर्णं कथं वक्तुं शक्यते यावत् नूतनज्ञानसंग्रहः तत्र न कृतः ? सर्वैरपि संस्कृताभिमानिभिः एतदर्थम् प्रयतितव्यम् ।

संस्कृतभाषाध्ययनाध्यापनम् भारतस्य सर्वेषु विभागेषु शतकानुशतकम् प्रवर्तितं दृश्यते । येषाम् मातृभाषा विभिन्ना वर्तते अेवंविधाः सर्वेऽपि संस्कृतपण्डिताः स्वकीयविचाराणाम् प्रदर्शनम् संस्कृतभाषाश्रयेण कर्तुं प्रभवन्ति । अनेन संस्कृतभाषाद्वारा भारते ऐक्यम् ऐकात्मत्वं च पुष्टम् भवति । एतत् संस्कृतस्य विलक्षणम् माहात्म्यम् कदापि केनापि न विस्मर्तव्यम् । संस्कृतेन प्रदत्ता एषा महती शक्तिर्वर्तते । तस्याः संरक्षणं संवर्धनम् निखिलभारतवासिजनानाम् कृते असंशयम् अत्युपकारि भवेत् इत्यत्र नास्ति संशयलेशोऽपि । यद्यपि एतत्सत्यम् तथापि संस्कृतशिक्षा प्रशालासु अनिवार्या करणीया इति अस्माभिः नानुमोद्यते । अस्माभिः ये उपायाः अस्मिन् भाषणे संग्रथिताः तैरेव अस्माकम् इष्टम् सिद्धम् भवेत् । सर्वत्र संचारप्रचारादिभिः संस्कृतविषये जनाः बद्धादरा भवेयुः, संस्कृताध्ययनाध्यापनार्थं च ते लोकानामानुकूल्यं संपादयेयुः । तेन च नैकशः विद्यार्थिनः संस्कृतपाण्डित्यसंपादनार्थम् सिद्धा भवेयुः अत्र नास्ति कोऽपि सन्देहः । अनेनैव प्रकारेण जगत् पुनः पश्येत् सकलं भारतम् संस्कृतघोषेण निनादितम् । “यावत् गङ्गा च गोदा च तावदेव हि संस्कृतम्” इति प्रत्यक्षम् भवेत् । भोपालनगरे सुरभारतीवार्षिकोत्सवप्रसङ्गे चालकैः मह्यम् स्वकीयविचारप्रकटनार्थं अवसरः दत्तः अतः तेभ्यः सर्वेभ्यः धन्यवादान्वितीर्य विरमामि भाषणप्रसङ्गात् ।

शारदा-गौरव-ग्रन्थमाला...क्र. ११

# भूपो भिषक्त्वं गतः ।

रचयिता

पं. गणेशशास्त्री लोण्ढे, पुण्यपत्तनम्

---

पुरस्कारः

## संवादाः मतिपथं नेयाः

नूनमधुना सर्वक्षेत्रेषु सर्वव्यवसायेषु च धनतृष्णा कदर्थयति कलङ्कयति च व्यवसायिनः। उत्कोचदुष्टः शासनाधिकारः वाणिज्यं लाभातिशय लोभेन कृष्णीकृतम्, विद्याप्रदानमपि ज्ञानपण्यैर्गुरुभिः सोपहासनिन्दापद मुपनीतम् । इत्थंभूते कथमयं वैद्यकव्यवसायोऽप्यामनः शुचितां परिचालयेत् । नूनमिममाशयमनुसंधाय श्री लोण्ढे शास्त्रिभिर्लिखितं भवेदिदं 'भूपो भिषक्त्वं गतः' इति पञ्चप्रवेशकं लघुनाटकमिति मन्ये ।

'विना द्रव्यलाभं न कस्यापि गेहं

प्रयास्येव भद्रं त्वया मे न कार्यम् ।' इति ब्रुवन् निर्धनोऽयं वैद्यापसदः, प्रत्युत परोपकारव्यवसायी कार्यान्तरातिपातेनापि रुग्णचिकित्सातत्परोऽयं वैद्यराजः, आत्मनः प्रजास्वपचारान्वेषणार्थं वेषान्तराणि विधाय संचरन् प्रजाहितरतोऽयं भूपः, मातृभक्तोऽयं सुष्ठु भाषमाणो बालः सुभाषः, शयननिबद्धा बलवदस्वस्थशरीरा प्रोषितभर्तृका च तस्य जननी— इत्येतानि पात्राणि नाटकेऽस्मिन् विविधस्वभाववैचित्र्यं प्रदर्शयन्ति। भाषाऽस्य सुमधुरा सुललिता, प्रसादगुणान्विता च। अस्य प्रयोगोऽवश्यं विधेयः शालासु संमेलनमहोत्सवे । संवादा हि ग्रथिता अस्मिन् यदि मतिपथं नीताः स्युः तर्हि विद्यार्थिनः संस्कृतभाषायां प्राविण्यं प्राप्नुयुः, इति मे मतिः ।

मधुरञ्जनम्
पुण्यपत्तनम् ४

न. गो. सुरु
२५-१-६५

* * * * * * * * * * * * * * * * * * * * * * * *

चैत्र शु. १, शके १८८९

मूल्यम् रु. १

श्रीगजानन: प्रसन्नोऽस्तु

# गुरुवर्य- म. पां. ओक-महाभागेभ्यः आदराञ्जलिसमर्पणपूर्वकम् इदं नाटकम् उपहारीक्रियते

दृढोद्योगिनं सात्त्विकानां वरेण्यं स्वधर्मप्रियं सर्वविद्वत्सु धन्यम् ।
महादेवनामाङ्कितं शिष्यमान्यं भजेऽहं गुरुं ज्ञानदातृष्वनन्यम् ॥१॥

धनेच्छां विना सम्यगध्यापयन्तं स्वशिष्यार्थमात्मानमायासयन्तम् ।
महादेवनामाङ्कितं शिष्यमान्यं भजेऽहं गुरुं ज्ञानदातृष्वनन्यम् ॥२॥

सदाचारनिष्ठं सुबोधं ददानं शुभं चित्तवच्छुभ्रवेषं दधानम् ।
महादेवनामाङ्कितं शिष्यमान्यं भजेऽहं गुरुं ज्ञानदातृष्वनन्यम् ॥३॥

स्वयं सत्पथं कर्मणा दर्शयन्तं हितं ज्ञापयित्वा सुमार्गं नयन्तम् ।
महादेवनामाङ्कितं शिष्यमान्यं भजेऽहं गुरुं ज्ञानदातृष्वनन्यम् ॥४॥

गृहस्थाश्रमं सुष्ठु संपादयन्तं स्वकीयानिवान्यान् मुदा पूरयन्तम् ।
महादेवनामाङ्कितं शिष्यमान्यं भजेऽहं गुरुं ज्ञानदातृष्वनन्यम् ॥५॥

परेषां हितार्थं स्वमर्थं त्यजन्तं तदर्थं तथा क्लेशजातं भजन्तम् ।
महादेवनामाङ्कितं शिष्यमान्यं भजेऽहं गुरुं ज्ञानदातृष्वनन्यम् ॥६॥

सदा ज्ञानदानेन कालं नयन्तं सतां चित्तवृत्तिं विदा तोषयन्तम् ।
महादेवनामाङ्कितं शिष्यमान्यं भजेऽहं गुरुं ज्ञानदातृष्वनन्यम् ॥७॥

अनेकानमूल्यान् प्रबन्धाँल्लिखन्तं तथा छात्रवर्गं मुहुः पाठयन्तम् ।
महादेवनामाङ्कितं शिष्यमान्यम् भजेऽहं गुरुं ज्ञानदातृष्वनन्यम् ॥८॥

ओककुले लब्धजनुः पित्रोर्वशगो विनीतवेषधरः ।
जयति महादेवगुरुः शिष्यस्वान्ते कृतस्थितिर्नित्यम् ॥९॥

गणेशशर्मणा लोण्ढे-कुलजेन समर्प्यते
गुरवे मान्यवर्याय पद्याञ्जलिरयं मुदा ॥१०॥

# अहो गुणपक्षपातित्वम् !

रिपुभूग्रहरूपमिते ख्रिस्ताब्दे जगन्नाथशङ्करशेठशिष्यवृत्तिलिप्सया विठ्ठलपुरं हित्वा पुण्यपत्तनमहमाशिश्रियम् । क्व लक्ष्मीपतिपरायणलक्ष्यभूतं विठ्ठलपुरं क्व च सरस्वतीकण्ठाभरणविद्वद्वृन्दनिषेवितं पुण्यपत्तनम् । क्व वैधेयव्रातधुरीणो विदूषकवेषधरः पण्ढरपुरवर्ती मादृशो विद्यार्थिजनः क्व च गुणिगणगणनागतो विनतिनेपथ्यभृच्चतुरालापचणः पुण्यपत्तनस्थोऽध्येतृमेलापकः । एवमवधारयतो मम हृदयं प्रथमं देवताया उपहारं कर्तुं नीयमानस्याजशिशोरिव महत्या भीत्या कमपि प्रकम्पं भेजे ।

तत्रभवतां गीर्वाणवाणीपारीणानां श्रीमदोकशास्त्रिणां शङ्करशेठ शिष्यवृत्तये स्पृहयालूनामनन्यः पाठक इति कीर्तिः पण्ढरपुरस्थस्यैव मम श्रवणसरणिमापप्तत् । तेन पुण्यपत्तनं प्राप्तमात्र एवाहं शनिवारविभागे वर्तमानं भारतीभवनसंज्ञकं गुरुचरणानां निवासभूतं सदनमासदम् । प्रविश्य च प्रसन्नानना स्मितमधुरा सितवेषधारिणी तेजस्विनी गुरूमूर्तिर्मया व्यलोकि । दर्शनसमकालमेवातिमहतादरेण मदीये मानसे पदमकारि । अदृष्टचरं मामकीनं तथाभूतमपूर्वमाकारमवलोक्य स्निग्धमसृणेनाकैकरेण चक्षुषा मामापादमस्तकं निरीक्ष्य गुरुवरा मामेवमप्राक्षुः । कुतो भवान् । किमपेक्ष्यात्रागम्यते भवतेति । गुरुगौरवगरिमसनाथेन स्वान्तेन मयापि प्रत्यवाचि । भगवन्, भगवतो यशःसौरभमाघ्राय संस्कृतशिष्यवृत्तीप्साप्रपूरितचेता भगवच्चरणसंनिधौ संस्कृतं शिशिक्षिषुरागतोऽस्मीति । आचार्यवरैः सस्मितमभाषि । रे, वयं यदृच्छया यस्मै कस्मैचिच्छात्राय वर्गेऽस्माकं स्थानं नैव दास्याम इति । मया पुनः सादरमभीहितम् । भगवन्, तत्रभवतां मुख्याध्यापकानां नाईकमहोदयानामेतदर्थं पत्रमानीतमिति । श्रीमदोकमहेच्छैर्भूयोऽभ्यधायि । रे, साधु कृतम् । तथापि परीक्षां विना कथं त्वादृशाय ग्रामान्तरादागताय संस्कृतविषयेऽज्ञातगुणाय प्रवेशोऽकस्माद्दातव्य इति । मयापि धृतिं धृत्वा गरीयस्या प्रह्वतया प्रत्युतरं व्यतारि । बाढम् । परीक्ष्यैव तावदहं प्रवेष्टव्य इति । परीक्षायां चेदुत्तीर्णतां न लभेय द्रागेव मां निष्कासयितुमर्हन्ति भवन्त इति ।

तदनन्तरं प्रसन्नतामुपेत्य गुरुचरणैरेका प्रश्नपत्रिका तत्क्षणमेव मे दत्ता । मयापि तत्रैव गुरुसकाशं प्रश्नोत्तराणि लिखितानि । प्राप्तेषु पर्याप्तगुणेषु सन्तोषमितेषु च गुरुवर्येषु सपद्येव मया छात्रविशेषवर्गे प्रवेशोऽलम्भि । ततःपरं सततमेवाहं तत्रभवतां श्रीमदोकशास्त्रिणां भूयसः प्रेम्णो भाजनमभूवम् । तस्मै वदान्यजनसद्गुरवे नमो नमः ।

४२१-२२ शनिवार,
पुणें २

ओकशास्त्रिणां छात्रेष्वेकतमः विनतितमः
पन्तः विष्णुशर्मा

श्रीसरस्वती प्रसन्नास्तु ।।

# " भूपो भिषक्त्वं गतः "

सूत्रधारः (प्रथमं पद्यम्)

वागीशां वरदाम् ।। नमामः ।। ध्रु. ।।
हंसासन उपविष्टां दधतीम् ।।
वीणां श्रुतिसुखदाम् ।।१।। नमामः
वीणावादनमिषतो ददतीम् ।।
खलु धियमतिविशदाम् ।।२।। नमामः
मन्दस्मितयुतसुरम्यवदनाम् ।।
शरणं तत्त्वविदाम् ।।३।। नमामः ।।
प्रसादलेशो यस्याः क्षपयति ।।
संघातं विपदाम् ।।४।। नमामः ।।

(श्रीगणेशः प्रसन्नोऽस्तु ।। )

सूत्रधार -- ( द्वितीयं पद्यं पठति )

धन्वन्तरिरनिशम् ।।
अवतु वः ।। धन्वन्तरिरनिशम् ।। ध्रु. ।।
समस्तरोगान् जित्वा यच्छति यो मनुजेभ्यः शम् ।।
अवतु वः धन्वन्तरिरनिशम् ।।१।।
यस्यानुग्रहपात्रं जातः ।। भजति न नैराश्यम्।। २ ।।
अपूर्ववैद्यं यं मन्यन्ते मनुजा देवांशम् ।।३।।
अवतु वो धन्वन्तरिरनिशम् ।।

अलमतिविस्तरेण । विद्वद्वंशंगतेन लोण्ढेकुलोत्पन्नेन पाण्डुरङ्ग-सूनुना गणेशेन विरचितेन "भूपो भिषक्त्वं गतः" इत्यनेन नवेन नाटकेन विद्वद्भूयिष्ठाम् एतां परिषदम् उपस्थातुकामः प्रतिपात्रं यत्नम् आधातुं यथामति प्रयतिष्ये । (कर्णं दत्त्वा) अये शब्द इव श्रूयते । नूनं शय्यायां पतिता निर्मला देवी किमपि मन्त्रयते । तत् इदानीं गम्यते मया स्वकार्यम् अनुष्ठातुम् । (निष्क्रामति)

(ततः प्रविशति शय्यायां पतिता निर्मला देवी)

निर्मलादेवी — (स्वगतम्) कियन्तं कालं शयने पतिताऽस्मि । उत्तिष्ठामि इदानीम् । (उत्तिष्ठति) सौराज्यरम्ये एतस्मिन् देशे वसामि। महति कुले जाता महाकुलजेन परिणीताऽस्मि । तथापि प्रोषितभर्तृका दैन्येन पीडिता महता कष्टेन कालं नयामि । प्रतिदिनं क्षीयते मे शरीरम् । केनापि दारुणेन रोगेण अभिभूतास्मि इति मन्ये । मम एकः एव पुत्रो वर्तते सुभाषो नाम । अन्यः कोऽपि बान्धवो मम नैव विद्यते । न मरणाद् बिभेमि । परं मृतायां मयि अनाथो भवेन्मे वत्सः । न कोऽपि तं चिन्त-

यिष्यति । अत एव बलवद् दूयते मम मानसम् । किं करोमि । कं शरणं यामि । ( सविमर्शम् ) हन्त दृष्टः उपायः । वैद्यं कंचिदानेतुं सुभाषं सत्वरं प्रेरयामि । ( सुभाषम् आह्वयति ) वत्स सुभाष सत्वरमागच्छ । वत्स सुभाष सत्वरमागच्छ ।

( ततः प्रविशति सुभाषः )

**सुभाषः** — ( सप्रणामम् ) अम्ब, एष आगतोऽस्मि । कथय को नियोगः अनुष्ठीयतां मया ।

**निर्मलादेवी** — वत्स, प्रतिदिवसम् अङ्गैः परिहीये । दारुणः कश्चन रोगो मां बाधते इति मन्ये । उपायं चेन्न कुर्याम् अचिरादेव मृत्युमुखे पतिष्यामि । मृतायां मयि त्वाम् अनाथं न कोऽपि चिन्तयिष्यति । तत् सत्वरं गत्वा वैद्यं कंचिदानय । बलवत् अस्वस्थशरीराऽस्मि ।

**सुभाषः** —( साश्रुनयनः ) अम्ब, अनिष्टं मा आशङ्कस्व । प्रतिदिनं विपुलम् अन्नं मह्यं प्रयच्छसि । स्वयं तु अत्यल्पम् अन्नं खादसि । अद्य तावत् त्वया न किमपि भुक्तम् । एवं मा कुरु । सत्वरं गच्छामि वैद्यम् आनेतुम् ।

**निर्मलादेवी** — वत्स, सुभाष, मा चिरायस्व । यं कमपि वैद्यं सत्वरम् आनय । कण्ठगता मे प्राणाः ।

**सुभाषः** — मातः, न त्वया कापि चिन्ता कार्या । वैद्येन सह सत्वरं प्रत्यागमिष्यामि । एष गच्छामि वैद्यान्वेषणाय । ( पद्यं पठन् निष्क्रामति । )

पद्यम् — को रक्षेत् जननीम् ।। रुजार्ताम् ।। को रक्षेत् जननीम् ।। ध्रु.।। तातो यातः कुत्र न जाने ।। आयास्यति रजनी ।।१।। रुजार्तां को रक्षेत् जननीम् । तूर्णं गत्वाऽऽनेष्ये वैद्यम् ।। माऽस्तु कालहानिः ।। रुजार्तां स हि रक्षेत् जननीम् ।।२।। ( अपगच्छति )

**निर्मलादेवी** — ( सदृष्टिक्षेपम् ) अहो गतो मे वत्सो वैद्यम् आनेतुम् । अहं तावत् सकलक्लेशहरं भगवन्नामोच्चारणं करोमि । ( श्लोकान् पठति )

हरे राम हरे राम राम राम हरे हरे ।
हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे ।।१।।
कृष्णाय वासुदेवाय हरये परमात्मने ।
प्रणतक्लेशनाशाय गोविन्दाय नमो नमः ।।२।।
मृत्युंजयाय रुद्राय नीलकण्ठाय शम्भवे ।
अमृतेशाय शर्वाय महादेवाय ते नमः ।।३।।

( श्लोकान् पठन्ती निद्रावशं याति )

( प्रथमः प्रवेशः समाप्तः )

## द्वितीयः प्रवेशः

( ततः प्रविशति सचिन्तः सुभाषः )

**सुभाषः** –– अहह ! मातुराज्ञया वैद्यमन्विष्यतो मम घटिकाद्वयं जातम् । परं न अद्यापि कोऽपि वैद्यो मे दृष्टिपथमागतः । किं करोमि । भवतु अन्यत्र गमिष्यामि वैद्यान्वेषणाय । ( गन्तुमारभते ) अये कोपि उज्ज्वलवेषधरः पुरुषः इत एव आगच्छति । तमेव वैद्यस्य गृहं पृच्छामि । ( ततः प्रविशति पुरुषः )

**वैद्यः** –– ( स्वगतम् ) अहो अतिविषमः खलु कालः उपस्थितः । एतस्मिन् सप्ताहे न एकोऽपि रुग्णो मम गृहमागतः औषधं ग्रहीतुम् । एवं यदि भवेत् कथं वैद्येन जीवितव्यम् । रुग्णा एव वैद्यानां जीवनम् । एवं गते किं करणीयम् । कालाय तस्मै नमः इति यद् वदन्ति तत् सत्यमेव । ( दक्षिणाक्षि-स्पदनं सूचयित्वा ) अये, दक्षिणाक्षि मे स्पन्दते । असंशयं कोपि माम् आह्वयेत् रुग्णं परीक्षितुम् ।

**सुभाषः** –– ( पुरुषमुपसृत्य ) आर्य किं विचार्यते । कस्यापि वैद्यस्य गृहं मह्यं कथयितुमर्हति अत्रभवान् । वैद्येन मम बलवत् प्रयोजनमस्ति । अनुग्रहीतव्यः अयं दीनो बालः वैद्यगृहं कथयित्वा ।

**वैद्यः** –– ( सविस्मयम् ) अहो आश्चर्यम्, पत्तने विद्यमानेऽपि ग्रामे रत्नपरीक्षा । नास्ति मादृशो वैद्यवरो निखिलेऽपि अस्मिन्नगरे । वत्स, कथय मह्यं किमर्थं वैद्यगृहं गन्तुमिच्छसि ।

**सुभाषः** –– वैद्यराज नमस्तुभ्यं माता मे रोगपीडिता ।
नीत्वा नीरोगतां तां हि मातृभिक्षां प्रयच्छ मे ।।
उपकारं स्मरिष्यामि सततं ते दयानिधे ।
मदीयं जीवनं मात्रा हीनं स्यान्निष्प्रयोजनम् ।।

( इति वैद्यपादयोः पतति )

**वैद्यः** –– ( सुभाषमुत्थापयति ) वत्स उत्तिष्ठ । तव मातृवत्सलतां दृष्ट्वा सुतरां मोदते मम मानसम् । अवश्यम् आगमिष्यामि तव मातरं द्रष्टुम् । सर्वथा वीतचिन्तो भव ( पद्यं पठति )

पद्यम् –– त्यज बालक खेदम् ।। सत्वरम् ।। त्यज बालक खेदम् ।।
मातरमामन देवं परमम् ।। परिचर सानन्दम् ।।१।।
मातृ-देवता तुष्टा नियतम् ।। दद्याद् बहुमोदम् ।।२।।
मातुर्वचनं पालय सततम् ।। भज मा धीभेदम् ।।३।।

**सुभाषः** — वैद्यराज, अकालहीनम् आगन्तव्यम् मया सह । ममोपरि तव गुरुः उपकारो भवेत् ।

**वैद्यः** —— वत्स,

न धातोर्विज्ञानं न च परिचयो वैद्यकनये ।
न रोगाणां तत्त्वावगतिरपि नो वस्तुगुणधीः ।
परं केचिद् वैद्या इति तरलयन्तो जडजनान् ।
असून् मृत्योर्भृत्या इव वसु हरन्ते गदजुषाम् ॥

एवंविधा भिषक्पाशा वैवस्वतपाशा एव । नाहं तथाविधः । गुरोः सकाशात् मया सम्यक् आयुर्वेदः अधीतः । अतः असाध्यामयेन आक्रान्ताः भिषक्-चूडामणिभिः अपि परित्यक्ताः रोगिणः मया सप्ताहमात्रेण नीरोगतां नीताः । किं बहुना उक्तेन । श्रूयतां सावधानम्——

मस्ते दुःसहवेदना-कवलिते मग्ने स्वरेऽन्तर्गलं
तप्तायां ज्वरपावकेन च तनौ तान्ते हृषीकव्रजे ।
दूने बन्धुजने कृतप्रलपने धैर्यं विधातुं पुनः
कः शक्तः कलितामयप्रशमनो मत्तः परो विद्यते ॥
चिकित्सितस्तु संश्रुत्य यो वाऽसंश्रुत्य मानवः ।
नोपाकरोति वैद्याय नास्ति तस्येह निष्कृतिः ॥

इति केचन रुग्णा न जानन्ति । अतः आदौ एव सुवर्णनाणकं गृह्णामि । सुवर्णनाणकम् अगृहीत्वा न कदापि कमपि रोगिणं द्रष्टुं गच्छामि । अतः झटिति सुवर्णनाणकम् एकं देहि । अविलम्बितम् आगमिष्यामि त्वया सार्धं तव मातरं द्रष्टुम् ।

**सुभाषः** —— वैद्यराज, किं कर्तव्यम्, अकिञ्चनोऽहं काणवराटकम् अपि दातुम् असमर्थोऽस्मि ।

**वैद्यः** —— यदि एवं यथागतं संनिवर्तस्व । माता ते यदि पञ्चत्वं गच्छेत् न मे कापि हानिः ।

**सुभाषः** —— वैद्यराज, न प्राणदानात् परं दानम् इति अभियुक्ता व्याहरन्ति । अतः प्रसीद । इमां मे अभ्यर्थनां न प्रत्याख्यातुम् अर्हसि । ( पुनः पादयोः पतति )

**वैद्यः** —— (सरोषम्) अरे दुर्विनीत सत्वरमपेहि । सत्वरमपेहि ।

सुखं यातु तेऽम्बा परं लोकमार्ता न मे दुःखदा स्यात् तदीयान्तवार्ता ।
विना द्रव्यलाभं न कस्यापि गेहं प्रयाम्येव भद्र त्वया मे न कार्यम् ॥

सत्वरमपेहि । कथं न अद्यापि अपगच्छसि । अथवा, अहमेव अपगच्छामि (निष्क्रामति)

**सुभाषः** —— हा धिक् अपगतोऽयं निर्दयो वैद्यापसदः । भवतु । अन्यत्र गच्छामि वैद्यान्वेषणाय । ईशप्रसादाद् अन्यः कोऽपि वैद्यवरो मम दृष्टिपथमागच्छेत् तमेव प्रार्थयिष्ये मम मातरं द्रष्टुम् । ( निष्क्रान्तः )



# अथ तृतीयः प्रवेशः

( ततः प्रविशति सुभाषः )

**सुभाषः** -- वैद्यं गृहीत्वा सत्वरम् आगमिष्यामि इति प्रतिज्ञाय गृहान्निर्गतस्य मम इदानीं घटिका-चतुष्टयं जातम्। परं न अद्यापि कोऽपि उदारधीः वैद्यो मम दृष्टिपथमागतः। द्वित्राः वैद्या मया संप्रार्थिताः परं न कोऽपि वैद्यो दीनारम् अगृहीत्वा मम मातरं द्रष्टुमागच्छति। कथं नु मया जननीप्राणाः रक्षितव्याः। शून्यमिव भाति सर्वम्। एकेन निर्घृणेन वैद्येन तु प्रोक्तम्। अये द्रव्येण सर्वे वशाः। धनमूलमिदं सर्वम्। अतः यस्य सकाशे धनं नास्ति स न कदापि वैद्यस्य गृहं गच्छेत् वैद्यसाहाय्यं याचितुम्। एतत् तस्य वैद्यस्य वचनं श्रुत्वा परं विषादम् उपगतं मे चित्तम्। का गतिः। कमपि धनिकम् उपगम्य सौवर्णं नाणकमेकं याचिष्ये। ( गन्तुमारभते। ) पुरतोऽवलोक्य ( साश्चर्यम् ) अये विविध-भूषण-मण्डित-विग्रहः उज्ज्वल-वेषधरः अयं कोऽपि महान् धनाढ्यः इत एव आगच्छति। धनाढ्यम् एनं सुवर्णनाणकम् एकं याचिष्ये वैद्याय दातुम्। ( ततः प्रविशति राजा सुदर्शनः )

**राजा** -- ( स्वगतम् ) अहो, अप्रकटीकृतराजभावो लोकव्यवहारं द्रष्टुं पद्भ्यामेव कियच्चिरं नगरभ्रमणपरोऽस्मि। अधुना व्यवहारदर्शनार्थं राजसभां सत्वरं गमिष्यामि। ( गन्तुम् आरभते )

**सुभाषः** -- ( सादरम् उपसृत्य ) भो धनिकमहाशय, एकेन सुवर्ण-नाणकेन मे प्रयोजनमस्ति। अतः सौवर्णं नाणकमेकं मह्यं दातुमर्हसि। ईश्वरस्तव कल्याणं विधास्यति।

**राजा** -- ( स्वगतम् ) अये कुशाग्रबुद्धिः अयं बालो दृश्यते। परं न आत्मनः राजभावं प्रकटी करिष्यामि ( प्रकाशम् ) वत्स, किं करिष्यसि सौवर्णनाणकेन। किंचित् न्यूनं धनं दास्यामि चेत् न किं चरितार्थो भविष्यसि।

**सुभाषः** -- धनिकमहाशय, नैकशास्त्रपारंगतो मे जनको धन-संपादनाय देशान्तरं गतः। स कुत्र वर्तते इति न ज्ञायते। मम माता तु दारुणेन रोगेण पीडिता बलवदस्वस्थशरीरा शय्यायां पतिता तिष्ठति। तस्याः कृते वैद्यं कमपि नेतुमिच्छामि परं न कोपि वैद्यः सौवर्णनाणकं विना मम मातरं द्रष्टुमागच्छति। अतो वैद्याय दातुं सुवर्णनाणकमेकम्

अपेक्षे। धनिक महाभाग अनुग्रहीतव्योऽयं दीनो बालो दीनारदानेन। नाहं तव उपकारान् कदापि विस्मरिष्यामि।

**राजा** –– वत्स, किं ते नामधेयम्। किं ते मातुर्नाम। क्व च तव गृहं वर्तते।

**सुभाषः** –– महाभाग, मम नामधेयं सुभाष इति। मम मातुर्नाम निर्मलादेवी इति। भगवतो विश्वेश्वरस्य मन्दिरस्य समीपे वर्तते लघुतरम् अस्माकं गृहम्।

**राजाः** –– वत्स सुभाष! गृहाण इमं दीनारम्। वैद्याय च दत्त्वा तं सत्वरं स्वगृहं नय। ईश्वरप्रसादात् अचिरादेव तव माता अनामयसंपन्ना भवेत्। (दीनारं ददाति)

**सुभाषः** –– (दीनारं गृहीत्वा) धनिकमहाशय! न कदापि तव उपकारं विस्मरिष्यामि। अहो औदार्यं तव। त्वादृशैर्महाभागैरेव धरा धार्यते। एष गच्छामि वैद्यान्वेषणाय (निष्क्रामति)

**राजा** –– (सरोषम्) अहो कथं मम राज्ये एतादृशा निर्घृणा वैद्या वर्तन्ते।

रोगपङ्कार्णवे मग्नं यः समुद्धरते जनम्।
कस्तेन न कृतो धर्मः कां च पूजां न सोऽर्हति॥

इति एते वैद्याः कथं न जानन्ति। एवंविधाः वैद्यब्रुवाः नामतो ज्ञात्वा मया अवश्यं दण्डनीयाः। अपरं च नैकशास्त्रपारंगतः सुभाषजनको धनसंपादनाय मद्देशं परित्यज्य देशान्तरं गतः। अतः नूनम् अहमपि दोषभाक्। दृश्यतां तावत्।

शास्त्रोपस्कृतशब्दसुंदरगिरः शिष्यप्रदेयागमाः।
विख्याताः कवयो वसन्ति विषये यस्य प्रभोर्निर्धनाः।
तज्जाड्यं वसुधाधिपस्य कवयो ह्यर्थं विनापीश्वराः।
कुत्स्याः स्युः कुपरीक्षका न मणयो यैरर्घतः पातिताः॥

भवतु। बालस्य गृहं कुत्र वर्तते तन्ममविदितमेव। अतः यावद् बालो गृहं न गतः तावत् अहमेव वैद्यो नाम भूत्वा बालस्य जननीं द्रष्टुं गच्छामि। अत्र कालातिपातो न युक्तः। एष गच्छामि वत्सस्य मातरं द्रष्टुम्। (निष्क्रामति)

(इति तृतीयं प्रेक्षणकम्)

# चतुर्थः प्रवेशः

( ततः प्रविशति आनन्द-विकसित-वदनः सुभाषः )

**सुभाषः** — अहो बहु उपकृतं धनिकमहाशयेन। इदानीं धनिकेन दत्तं दीनारं दत्त्वा नयामि कमपि वैद्यं मातरं चिकित्सितुम्। अविलम्बितं मया गन्तव्यम्। ( गन्तुमारभते ) ( किंचिद् गत्वा साश्चर्यं ) अये को नु खलु एषः प्रसन्नवदनः शुभ्रवसनः धृतरक्तोष्णीषः सोपानत्कः करकलितपेटिकः विनीतवेषधरः महाभागः इतः एव अभिवर्तते। असंशयम् अनेन केनापि भिषग्वर्येण भवितव्यम्। ( ततः प्रविशति यथा निर्दिष्टः पुरुषः )

**वैद्यराजः** — ( स्वगतम् ) कार्यवशान्मया ग्रामान्तरं गन्तव्यम् इति प्रस्थितोऽस्मि। दिव्यौषधपूर्णां पेटिकाम् अगृहीत्वा न कदापि प्रवासम् अङ्गीकरोमि। अतः इयं पेटिका मया गृहीता। अनेनैव मार्गेण स्थानकं गच्छामि। अल्पेनैव कालेन विद्युच्छकटः प्रचलिष्यति। ( गन्तुं प्रवृत्तः )

**सुभाषः** — ( ससंभ्रमम् उपसृत्य ) वैद्यराज वन्दे।

**वैद्यराजः** — वत्स, वैद्योऽहमिति कथं त्वया ज्ञातम्

**सुभाषः** — आकारवेषप्रत्ययान्मया तर्कितम्।

**वैद्यराजः** — किम् अपेक्षसे। सत्वरं ब्रूहि। मया कार्यवशाद् ग्रामान्तरं गन्तव्यम्। अतः स्थानकं प्रति प्रस्थितोऽस्मि।

**सुभाषः** — भो वैद्यराज मम माता दारुणेन रोगेण पीडिता शय्यायां पतिता वर्तते। विलम्बाक्षमः तस्याः व्याधिः। वैद्यार्थमितस्ततः परिभ्रमतो मे महान् कालो गतः।

**वैद्यराजः** — वत्स न एकोऽपि वैद्यः इतः पूर्वं तव दृष्टि पथम् आगतः !

**सुभाषः** — अथ किम्। वैद्यत्रयं मया दृष्टम्। परं न कोऽपि वैद्यो दीनारम् अगृहीत्वा मम मातरं द्रष्टुम् ऐच्छत्।

**वैद्यराजः** — न मातुः परं देवतम्। तर्हि किमिति दीनारं दत्त्वा त्वया वैद्यः स्वगृहं न नीतः।

**सुभाषः** — वैद्यराज, मम समीपे काणवराटकोऽपि नासीत् वैद्याय दातुम्। का कथा दीनारस्य।

**वैद्यराजः** — कथं तर्हि मां प्रार्थयसे।

**सुभाषः** — आर्य, मया प्राथितः कोऽपि धनिकमहाशयः वैद्याय

दातुं दीनारमेकं मह्यम् अदात् । दीनारम् इमं गृहीत्वा आगम्यतां मया सार्धं मातरं मे चिकित्सितुम् । ( दीनारं दातुं प्रवर्तते )

**वैद्यराज** — वत्स, किं ते नामधेयम् ।

**सुभाषः** — वैद्यराज, सुभाष इति मम नामधेयम् ।

**वैद्यराजः** — वत्स, सर्वथा अन्वर्थं ते नामधेयम् । सुभाष ! नाहं दीनारम् अपेक्षे । दीनारम् अगृहीत्वा आगमिष्यामि तव गृहं मातरं ते द्रष्टुम् ।

पद्यम् — किं भजसे खेदम् ।। बालक ।। किं भजसे खेदम् ।। ध्रु०।।
रुग्णः श्रीलो निःस्वो यदि वा ।। गणयामि न भेदम् ।।१।।
लाभाभावे मदीयचित्तम् ।। भजति न निर्वेदम् ।।२।।
रोगान् मुक्तं दृष्ट्वा रुग्णम् ।। विन्दे बहु मोदम् ।।३।।
बालक ।। किं भजसे खेदम् ।।

" वैद्यराज नमस्तुभ्यं यमराजसहोदर ।
यमस्तु हरति प्राणान् त्वं हि प्राणान् धनानि च " ।।
इति यम् उद्दिश्य जना वदन्ति नाहं तादृशो वैद्यापसदः ।
क्वचिद् धर्मः क्वचिन्मैत्री क्वचिदर्थः क्वचिद्यशः ।
कर्माभ्यासः क्वचिच्चेति चिकित्सा नास्ति निष्फला ।।

इति मनसि कृत्वा येन केनापि आकारितः तत्क्षणमेव गच्छामि रुग्णम् उपचरितुम् । न मया वृत्तिहेतोः आयुर्वेदाध्ययनं कृतम् । गुरुकार्यं परित्यज्य एष आगच्छामि त्वया सार्धम् ।

**सुभाषः** — अनुगृहीतोऽस्मि देवेन, यद् भवादृशः निःस्पृहः चिकित्सकप्रवरो मया लब्धः । माता मे भवतो दर्शनादेव रोगमुक्ता भवेत् इति दृढम् आशासे ।

**वैद्यराजः** — वत्स सुभाष, स्वस्थस्य स्वास्थ्यरक्षणम् आतुरस्य विकार-प्रशमनं च वैद्यस्य पवित्रं कर्तव्यम् उक्तं च

'भिषक् सदाऽऽतुरान् सर्वान् स्वसुतानिव यत्नवान् ।
आबाधेभ्यो हि संरक्षेत् इच्छन् धर्ममनुत्तमम् ।।
धर्मार्थं चाथ कामार्थं नायुर्वेदो महर्षिभिः ।
प्रकाशितो धर्मपरैरिच्छद्भिः स्थानमक्षरम् ।।
नार्थार्थं नापि कामार्थम् अथ भूतदयां प्रति ।
वर्तते यश्चिकित्सायां स सर्वमतिवर्तते ।।
कुर्वते ये वृत्त्यर्थं चिकित्सापण्यविक्रयम् ।
ते हित्वा काञ्चनं राशिं पांशुराशिमुपासते ।।

अतो दर्शय मे त्वद्गृहमार्गम् ।

**सुभाषः** — वैद्यराज, आगम्यतां मया सार्धम् । समीपमेव वर्तते मम गृहम् । ( उभौ गन्तुम् आरभेते )

( सहसा प्रविश्य वैद्यराजमुपगम्य )

**सुहासः** -- वैद्यराज, न गन्तव्यम् । न गन्तव्यम् ! श्रूयतां मे वचनम् ।

**वैद्यराजः** — वत्स, किं ते नाम ! कस्माच्च मां गमनात् निवारयसि ।

**सुहासः** — सुहास इति मम नामधेयं वर्तते । मम पिता धनाढ्योऽपि दारुणेन रोगेण पीडितः मासषट्कं शय्यायां पतितो वर्तते । बहवो विख्याता वैद्याः तम् उपचरन्ति । परं न कोऽपि विशेषः अद्यापि वर्तते । अतो भवता मया सार्धम् आगन्तव्यं पितरं मे उपचरितुम् । विलम्बाक्षमः तस्य व्याधिः इति भाति । तस्माद् बालस्य मम प्रणयं विहन्तुं नार्हति भवान् । भवते विपुलं धनं दास्यति मम जनकः । प्रथमं मया सार्धम् आगन्तव्यम् । पश्चात् गम्यताम् अनेन बालकेन सह इति सविनयं प्रार्थये ।

**वैद्यराजः** -- वत्स सुहास, बलवत् अस्वस्थशरीरा वर्तते माता अस्य कुमारस्य । अतः ताम् उपचरितुं मया सत्वरं गन्तव्यम् । तस्मात् अलम् इदानीम् उपरोधेन । सर्वथा असमर्थोऽहं त्वया सह आगन्तुम् । ( सुभाषाभिमुखो भूत्वा ) वत्स सुभाष! दर्शय मे त्वद्गृहमार्गम् । एष त्वाम् अनुसरामि ।

**सुभाषः** -- वैद्यराज, इतः इतः आगम्यताम् ।

( उभौ निष्क्रामतः )

**सुहासः** -- अहो निःस्पृहत्वम् अस्य वैद्यराजस्य । यदि मम रोगार्तं जनकम् उपचरितुम् अयम् आगच्छेत् असंशयं मम जनको मृत्युमुखात् मुक्तो भवेत् इति दृढं विश्वसिमि । अतः अहमपि सुभाषेण सह प्रस्थितं वैद्यं सत्वरम् अनुसरामि । ( निष्क्रामति )

( इति चतुर्थं प्रेक्षणकम् )

## पञ्चमं प्रेक्षणकम्

( ततः प्रविशति विवर्णवदना बलवदस्वस्थशरीरा शय्यायां पतिता भगवन्नामजपपरा निर्मलादेवी । )

**निर्मलादेवी** —– हरे राम हरे राम राम राम हरे हरे ।
हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे ॥
कृष्णाय वासुदेवाय हरये परमात्मने ।
प्रणतक्लेशनाशाय गोविन्दाय नमो नमः ॥
मृत्युंजयाय रुद्राय नीलकण्ठाय शम्भवे ।
अमृतेशाय शर्वाय महादेवाय ते नमः ॥

( श्लोकपठनात् विरम्य स्वगतम् ) अहो कियन्तं कालं भगवन्नामजपपराऽस्मि । महान् खलु कालो गतः वत्सस्य इतो गतस्य । कथं नाद्यापि सुभाषः आगच्छति वैद्येन सह । अथवा दरिद्राम् अनाथां प्रोषितभर्तृकां मां न कोऽपि वैद्यः चिकित्सितुम् आगच्छेत् इति मे निश्चिता मतिः । तर्हि अलं वैद्यागमनप्रतीक्षया । केवलं सत्वरमागच्छतु मे वत्सः इति आशासे । कण्ठगता मे प्राणाः । भवतु । आकारयामि तावत् वत्सम् । ( क्षीणस्वरेण वत्सम् आह्वयति ) वत्स सुभाष सत्वरमेहि । सत्वरमेहि । ( ततः प्रविशति वैद्यो नाम भूत्वा राजा सुदर्शनः ) राजा ( स्वगतम् ) अत्यल्पम् अपि नितान्तं स्वच्छं गृहम् एतद् दृष्ट्वा प्रसन्नो ममान्तरात्मा । निर्मलादेवी इति नाम यथार्थमेव । ( निर्मलादेवी पुनः सुभाषम् आह्वयति ) वत्स सुभाष, सत्वरमेहि । न मे वैद्येन प्रयोजनम् । ( राजा उपसृत्य ) आर्ये समाश्वसिहि, समाश्वसिहि । एषोऽहम् आगतोऽस्मि त्वां चिकित्सितुम् । तव पुत्रः अचिरादेव आगमिष्यति । न त्वया अल्पापि चिन्ता कार्या । त्वां सम्यक् परीक्ष्य यथोचितं करिष्यामि । सर्वथा वीतचिन्ता भव । अल्पेनैव कालेन त्वं निरामया भविष्यसि । ( वारं वारं निरीक्ष्य स्वगतम् । न खलु कोऽपि रोगो बाधते इमां साध्वीम् । केवलं पर्याप्तम् आहारम् अलभमाना कृशतां गता इयं साध्वी आत्मानं रोगाभिभूतं मन्यते । भवतु । एवं तावद् ब्रवीमि ( प्रकाशम् ) आर्ये यथा अहं पश्यामि तथा नायं तव व्याधिः दुःसाध्यः । दर्शनमात्रेण एव एतत् मया ज्ञातम् । मम वचने अविश्वासो नैव कर्तव्यः । सत्यमेव मया उक्तम् ।

**निर्मलादेवी** —– चिकित्सकाग्रेसर, देवदूत इव मे प्रतिभासि । शीघ्रगुणकरं किंचिदौषधं सत्वरं मे दातुमर्हसि । न भवतः उपकारं कदापि विस्मरिष्यामि । केवलं पुत्रार्थं जीवितुम् इच्छामि ।

**राजा** —– आर्ये सर्वथा वीतचिन्ता भव । मया क्रियमाणेन उपचारेण ईश्वरप्रसादात् सपुत्रायाः तव कल्याणं भवेत् । यः कोऽपि उपचारः आवश्यकः इति मे भाति स मया इदानीं पत्रे लिख्यते ( पत्रं लिखति ) भद्रे

एतत् पत्रं गृहागताय पुत्राय दीयताम् । दीनपरिपालनदक्षो भगवान् युवयोः सततं कल्याणं विधास्यति । कार्यान्तरम् अनुष्ठातुं मया सत्वरम् इतो गन्तव्यम् । अतः नाहम् अधिकं कालम् अत्र स्थातुं शक्नोमि । क्षम्यताम् । एष आपृच्छे अत्रभवतीम् ( निष्क्रामति )

( ततः प्रविशति वैद्येन सह सुभाषः )

**सुभाषः** —— ( मातरम् उपसृत्य सप्रणामम् ) अम्ब क्षमस्व मम कालातिपातम् । न कोऽपि वैद्यो दीनारग्रहणं विना आगन्तुमैच्छत् । अन्ततः मया प्रार्थितः कोऽपि धनिकमहाशयो वैद्याय दातुं दीनारम् एकं मह्यम् अदात् । अनन्तरं वैद्यमन्विष्यता मया एते वैद्यवराः लब्धाः ( वैद्यं दर्शयति ) एते प्रार्थनासमकालमेव स्वकार्यं परित्यज्य मया दीयमानं दीनारम् अगृहीत्वा एव त्वां द्रष्टुम् आगताः । सत्वरं कथय एतेभ्यः निखिलां निजावस्थाम् ।

**निर्मलादेवी** —— ( वैद्यं सादरं प्रणम्य ) वैद्यराज उपविश्यताम् आसने । ( सुभाषाभिमुखीभूय ) वत्स वञ्चना काचित् अत्र जाता इति मन्ये । त्वया प्रहितो वैद्यः कश्चिद् इदानीमेव अत्र आगत्य मदीयरोगपरीक्षां कृत्वा पत्रे भेषजनिर्देशं विधाय निर्गतः । तव आगमनम् एव प्रतीक्षमाणा अतिष्ठम् । वत्स गृहाण एतत् पत्रम् । ( पत्रं प्रयच्छति )

**वैद्यराजः** —— वत्स सुभाष, मम व्यवसायबन्धुना किमौषधं दातुं चिन्तितम् इति ज्ञातुमिच्छामि । अतो देहि पत्रं मम हस्ते ।

**सुभाषः** —— वैद्यराज गृह्यताम् एतत् ( वैद्यराजहस्ते पत्रं ददाति )

**वैद्यराजः** —— ( पत्रम् अनुवाचयति सानन्दं च वदति ) वत्स गृहाण एतत् पत्रम् । सावधानं च उच्चस्वरेण पत्रम् एतत् वाचय । शृणोतु ते माता ।

**सुभाषः** —— यथा वैद्यराजः समाज्ञापयति । ( मातरं प्रार्थयते ) मातः सावधानं श्रूयताम् मया वाच्यमानं पत्रम् । ( पत्रं वाचयति ) "आर्ये ! यस्य राज्ये शीलसंपन्ना विद्वांसः पर्याप्तम् आहारं न लभन्ते, धनसंपादनार्थं च देशान्तरं व्रजन्ति, धिक् तं राजानम् । कथं सज्जनरञ्जनं विना राजशब्दः अर्थवान् स्यात् । अल्पेनैव कालेन दीनारशतं दत्त्वा प्रेषयामि मे सेवकम् । दीनारशतस्वीकारेण अनुग्राह्यम् आत्मानम् इच्छामि । यदि पुनर्धनेन प्रयोजनं भवेत् अकालहीनं प्रेष्यतां बालो मत्समीपम् । कुशाग्रबुद्धिः तव पुत्रः सुभाषः यदा कृतविद्यः स्यात् तदा तस्मै न्यायाध्यक्षपदं दास्यामि । जगदीशः युष्माकं कल्याणं विदध्यात् । इति शम्

( सततं प्रजानुरञ्जनेच्छुः देशाधिपतिः **सुदर्शनः** )

**वैद्यराजः** — आर्ये धन्यासि । राज्ञा हि स्वयमागतेन तुभ्यं दीनार-शतदानं प्रतिश्रुतम् । न कोपि वैद्यः तुभ्यम् एतादृशं पुष्टिकरम् औषधं दातुं प्रभवेत् । इदानीं दैन्यरोगविनिर्मुक्ता असंशयं स्वस्थशरीरा संपत्स्यसे ।

**निर्मलादेवी** — ( उत्थाय ) वत्स, सुभाष, यस्मात् त्वया दीनारो लब्धः स न अन्यः कोऽपि धनिकः । स राजा सुदर्शन एव इति मन्ये । त्वत्तः वृत्तान्तं श्रुत्वा दीनजनपरिपालनदक्षः स्वयमेव वैद्यो भूत्वा मां द्रष्टुम् आगतः । किम् अन्यत् । ( ततः प्रविशति दीनारशतं गृहीत्वा राजसेवकः )

**राजसेवकः** —( निर्मलादेवीं प्रणम्य ) आर्ये ! सादरं वन्दे । राज्ञा दत्तं दीनारशतम् अत्रभवत्यै दातुमागतोऽस्मि । गृह्यतामेतद् ।
( दीनारशतं निर्मलादेवीहस्ते समर्पयति )

**निर्मलादेवी** — अहो प्रजावात्सल्यं महाराज-सुदर्शनस्य । भगवतः अवतार इव मे भाति महाराजः सुदर्शनः

**वैद्यराजः** — आर्ये धन्याऽसि । संपूर्णास्ते मनोरथाः । इदानीं स्वकार्यसंपादनार्थं ग्रामान्तरं गन्तुकामं माम् अनुजानातु अत्रभवती

**निर्मलादेवी** — वैद्यराज, मृत्युमुखान्मुक्तास्मि । उत्साहसंपन्नम् इदानीम् मम शरीरम् । प्राङ्गणद्वारं यावत् अनुगच्छामि भवन्तं पुत्रेण सह । ( वैद्यराजो गन्तुम् आरभते )

**राजसेवकः** —( वैद्यराजस्य पुरतो भूत्वा सविनयम् ) वैद्यराज ! न गन्तव्यम् । न गन्तव्यम् । कालः कश्चित् प्रतीक्ष्यताम् । चारमुखात् विदितवृत्तान्तेन महाराजेन अत्रभवद्भ्यो दातुं वैद्य पञ्चाननोपाधिप्रदान-पुरःसरं सदक्षिणाकम् इदं महावस्त्रं मम हस्ते समर्पितम् । तत्स्वीक्रियतां महावस्त्रमिदम् अत्रभवता । (वैद्यराजाय समर्पयति )

**निर्मलादेवी** — अहो कियत् औदार्यं महाराजस्य ।

**वैद्यराजः** — ( सानन्दम् ) चिकित्सा तावद् दूरे तिष्ठतु । केवलं चिकित्सितुम् आगतेन मया एतत् लब्धम् । सत्कर्माचारप्रवृत्तिः न कदापि निष्फला भवति इति यत् उच्यते तत् सर्वथा सत्यमेव ।

**राजसेवकः** — आर्ये श्रूयताम् । पण्डितश्रेष्ठं ते भर्तारं स्वराजधानीम् आनेतुम् इच्छति देवः । अतः तदन्वेषणाय तत्र तत्र प्रहिताः गुप्तचरा देवेन ; न कापि चिन्ता कार्या । अचिरादेव पत्या संगंस्यसे । युष्माभिः अनुज्ञातः महाराजसमीपं गत्वा निवेदयामि सर्वं वृत्तान्तं महाराजाय । साधयामि इदानीम् (निष्क्रान्तः)

**निर्मलादेवी** —— दिष्ट्या राजन्वान् अयं देशः। भगवतः प्रसादादेव लभ्यते ईदृशो देशाधिपतिः प्रजाभिः। ईदृशस्य भूपतेः आनृण्यं गन्तुं न कदापि प्रजाः शक्ष्यन्ति। राज्ञा अनुग्रहपात्रतां नीतो भवान् धन्यः खलु। इदानीं सपुत्रा अहं भवता सार्धं अन्वर्थनाम्नः देवस्य सुदर्शनस्य शिवं चिन्तयितुकामा एवम् आशासे——

राजन् अभ्युदयोऽस्तु जीव सुखितः साग्रं समानां शतं
लोकाराधन-तत्परोऽसि सततं मान्यं तवैतद् व्रतम्।
दृष्ट्वा ते चरितं विशुद्धमहितं नित्यं सतां संमतं
त्वद्देशाद् दुरितं विनाशसहितं भूयात्सुदूरं गतम्॥

(सर्वे वदन्ति) विजयतां महाराजः सुदर्शनः
विजयतां महाराजः सुदर्शनः
भगवान् धन्वन्तरिः सर्वेषां शिवं विधत्ताम्

(समाप्तं पञ्चमं प्रक्षणकम्)

स्व. म. पां. ओक विद्यार्थिमण्डलम्



मध्ये छायाचित्रे स्व. म. पां. ओक, चित्रस्य वामे ह. कृ. भिडे (७१), मो. ब. भिडे (७१)
उपविष्टाः प्रा. नी. श. नवरे (७१) गु. ग. पां. लोण्ढेशास्त्री (८१)
त्र्यं. बा. भोपळे (७१), प्रा. भा. वि. काळे (७१)

शारदा- ( पुण्यपत्तनम् २. ) ८: ११-१२ ★ रजि. क्र. एम्. एच्. ५५७
० लायसेन्स क्र. १३७ टु विदौट प्रीपेमेण्ट.

## शा र दा–गौ र व –ग्र न्थ मा ला

| पुष्पम् | लेखकः | मूल्यम् |
|---|---|---|
| १. श्रीराजेन्द्रप्रसादचरितम् | — पं. वासुदेवशास्त्री लाटकर | ३.०० |
| २. वात्सल्यरसायनम् | — प्रा. श्री. भा. वर्णेकर | १.०० |
| ★३. शिक्षैषा सात्त्विकी सताम् | — प्रा. रं. रा. देशपाण्डे | २.०० |
| ४. श्रीरामकृष्णपरमहंसीयम् | — प्रा. श्री. भा. वर्णेकर | १.२५ |
| ५. बालकानां जवाहरः | — पं. विघ्नहरि देव | ०.४० |
| ६. श्रीमान् विन्स्टनः चर्चिलः | — पं. औदुम्बरकर शास्त्री | ०.६४ |
| ७. अप्पाशास्त्री : साहित्यसमीक्षा | — प्रा. अशोक अकलूजकर | २.०० |
| ८. श्रीशिवराज्योदयमहाकाव्यम् | — प्रा. श्री. भा. वर्णेकर | ( क्रमशः ) |
| ९. 'समानमस्तु वो मनः' | — डॉ. ग. बा. पळसुले | ३.०० |
| १०. मराठी–संस्कृत-शब्दकोषः | — जोशी-परांजपे-गाडगीळ | (क्रमशः) |
| ११. भूपो भिषक्त्वं गतः । | — पं. ग. पां. लोण्ढेशास्त्रीं | १.०० |
| १२. विनायक-वीर-गाथा | — डॉ. ग. बा. पळसुले | ३.०० |

★ अप्रकाशितम् !

प त्र व्य व हा र स्था न म्

'शारदा' – कार्यालयः पुण्यपत्तनम् २

संपादकः मुद्रकः प्रकाशकः स्वामी – वसन्त अनन्त गाडगीळ
मुद्रणस्थलम्– यशवन्त मुद्रणालयः, १८३५ सदाशिव, पुण्यपत्तनम् २.
प्रकाशनस्थलम्-१.- म.म. प्रा.द.वा.पोतदार,४९८ शनिवार,पुण्यपत्तनम् २.
२.–श्री. ल.म. चक्रदेव, ३१८ राममोहनमार्गः मुम्बापुरी ४.
कार्यालयः— खजिनामहालभवनम्, ४२५ सदाशिव, पुण्यपत्तनम् २.